सर्वार्थसिद्धिः—हन्त, धिङ्मां, यतः पट्टाभिषेचनमनिच्छतोपि मौर्यस्याकालमृत्युं प्रति पापोहमेव निदानं।

वक्रनासः—(स्वगतं) अपि स्यादिदममात्यराक्षसकृत्यं, उत सत्यं, दुरवगाहं खल्वमात्यहृदयं।

नन्दाः—(प्रविश्य) (शोकमभिनीय) हा तात, अतिबीभत्समाचरितं दैवेन।

सर्वार्थसिद्धिः—वत्साः, एवं स्थिते दैवदुर्विपाके, केन वा सह रुद्यतां—

वत्सस्य हा गुरुजनेषु विनम्रता या
या चानुजेषु फणितिर्मधुरा सनीतिः।
या चेतनेषु करुणा स्मृतिमेत्य ता मे
कृन्तन्ति मर्म मनसः करपत्रतुल्याः ॥ २४ ॥

हा वत्स, देहि मे प्रतिवचनं, (मूर्छितः पतति)

दारुवर्मा—(सरभसं प्रविश्य) (शोकमभिनयन्) आर्य, जगदभिरामश्चन्द्रः क्वापि लीनः, तत्कथं वानन्दोदयः कुवलये भविता।

राक्षसः—(स्वगतं) मौर्यस्य ज्येष्ठः पुत्रश्चन्द्रगुप्तः क्वापि पलायित इति, शंसत्ययं, हन्त, महान्प्रमादः, अवशिष्टश्शत्रुशेषः। स तु धीरो धीमानपि, किमपि व्यवस्यत्येव (सवितर्कं) भवतु राक्षसोस्मि (सशोकं प्रकाशं) तात, विदितं, गच्छ, अलं कलकलेन।

(दारुवर्मा—निष्क्रान्तः)

सर्वार्थसिद्धिः—(लब्धसंज्ञस्समुपविश्य)—हा प्रिये मुरे।

सर्वाप्येकपदे भग्ना सा ते संकल्पसन्ततिः।
वत्सोत्सवदिदृक्षोत्थहर्षकन्दलिता च या ॥ २५ ॥

राक्षसः—महाराज, अलं शोकेन, चलितं तु चलितमेव, तदिदानीं शुभोदर्कं तर्कय।

सर्वार्थसिद्धिः—अमात्यवर्य, न किमपि जानाम्यहं, तदस्मच्छुभोदर्के भवानेव प्रमाणं।

राक्षसः—तर्हि, क्षत्रियावतंसस्य सानुजस्य नन्दस्याभिषेचनमेवास्मच्छुभोदर्कं तर्कयामि।

सर्वार्थसिद्धिः—यथा रोचते भवते।

चेटी—(प्रविश्य) (सवाष्पगद्गदं) देव्व, देवी मुळा पडिसिद्धा वि परिच्चेत्तुं जीविदं किदुज्जोआ वट्टइ, ता परित्तायदु (छाया–देव, देवी मुरा प्रतिषिद्धापि परित्यक्तुं जीवितं कृतोद्योगा वर्तते, तत्परित्रायतां)

सर्वार्थसिद्धिः—(सावेगमुत्थाय) प्रथमं तावन्मुरां सान्त्वयामः (इति वक्रनासपाणिमवलम्ब्य निष्क्रान्तः)

अन्ये सचिवाः—(लब्धामात्यानुमतयस्सनिश्वासं निष्क्रान्ताः)

राक्षसः—सेनापते यथास्थानं प्रतिष्ठापय वाहिनीम्।

सेनापतिः—यथादिशत्यमात्यः (निष्क्रान्तः)

राक्षसः—(परितो विलोक्य) हन्त, निर्मक्षिकः कृतोयं देशः, (नन्दानवलोक्य) वत्साः, चन्द्रगुप्तस्तावदवशिष्ट इव।

नन्दाः—(सोद्वेगं) कथं, अपि नाम जीवति चन्द्रगुप्तः ?

राक्षसः—आम, सूचितं दारुवर्मणा।

नन्दाः—तर्हि किं कुर्मः ?

राक्षसः—प्रणिधिमुखात्कथमपि ज्ञातव्यः, न कार्यो हि शत्रुशेषः।

नन्दाः—नोदासितव्यो बाल इति।

राक्षसः—अथकिमथकिं, स तु धीरः प्रज्ञावानपि, समूलं नाशयेदस्मानपि।

नन्दाः—महत्कष्टमिदं, चन्द्रगुप्तो विदितास्मत्कपटव्यापारः प्रतिकरिष्यत्येव।

राक्षसः—भवतु नाम, अद्य तावत्प्रचलतु भवत्पट्टाभिषेकविधिः अनन्तरकरणीयं करिष्यामः।

(इति नन्दैस्साकं निष्क्रान्तः)

द्वितीयोऽङ्कः।

## तृतीयोऽङ्कः

( ततः प्रविशत्यध्वधावनपरिश्रान्तः खड्गहस्तश्चन्द्रगुप्तः )

चन्द्रगुप्तः—कष्टं भोः कष्टं—

साधोस्ताद्दक्पितुरुपनतं वैशसं निर्निमित्तं
यत्तत्प्राणान्विगमयति मे स्वान्ततो दुःखितस्य।
गूढं यत्तैर्विहितमहितं गोमुखव्याघ्ररूपै-
स्तत्तानन्तर्द्रढयति तदुन्मूलनार्थं नितान्तम् ॥ १ ॥

क्वेदानीमागतोस्मि, (परितो विलोक्य सविमर्शं) हन्त, प्रविष्टोस्म्यरण्यानीं तथाहि—

क्वचित्क्षितिरुहोऽचला विलखिता इवास्तानिलाः
क्वचिद्गिरिगुहा रवेः किरणतप्तसत्त्वावृताः।
क्वचिद्बहुलतोलुपा विविधपत्रिसंसेविताः
क्वचिच्छ्रुतिविभेदकाः प्रविसरन्ति झिल्लीरवाः ॥ २ ॥

हन्त, अशनायापिपासाभ्यां नितरां पीडितोस्मि। तदितः पदात्पदमपि गन्तुमनीशोस्मि। हा नियते—

बान्धवेभ्यो वियुक्तं मां शत्रुगूढप्रयोगतः।
क्षुत्पिपासाभिदश्शत्रुः प्राणतोपि वियोजयेत् ॥ ३ ॥

हन्त, प्रचण्डश्चण्डमयूखातपः परिपचति सन्तप्तभर्जनकपालवालुकासन्निभैर्धूलिपटलैर्व्याकुला वसुन्धरा नखरान्। हा तात, प्रियचन्द्रगुप्त—

म्लानं भवेद्यदि मुखं मम वत्सलत्वा-
त्पृच्छन्निदानमतिदुःखभृशाकुलस्त्वम्।
दत्त्वाभिकाङ्क्षितमहो सुखितोऽभवो य-
स्तं त्वां त्यजाम्यमितदुःखमपानुकम्पः ॥ ४ ॥

(स्तम्भीभूय सामर्षदन्तपीडं गगने लक्ष्यं बध्वा) रे कपटकूटयन्त्रनियन्त्रितास्मत्पितृका नन्दहतकाः, दिष्ट्या जीवति स्वच्छन्दचारी चन्द्रगुप्तः—

निकृत्य करधूतया निशितखड्गवल्ल्या रणे
शिरोधरपरम्परां परिलुठत्सु शीर्षेषु वः।
पदं विनिदधाम्यहं निगलतो विमोच्यानुजै-
स्समं पितरमुज्ज्वलं नरपतिं करोम्याशु तम् ॥ ५ ॥

(दीर्घं निश्वस्य) कस्मै कथयेयं तेषां कापट्यम्। निर्जनेऽस्मिन्नरण्ये केन वा सह रोदिमि। (श्रममभिनीय) हन्त, न पारयामि सोढुं बुभुक्षा-पिपासे। निरन्तरपरिधावनाच्छक्तिविकलौ चरणौ। (अग्रतोवलोक्य)–

ऊर्मिमालाकुलं पाथो नन्दयन्नयने मम।
दिष्ट्या प्रवहति स्फीतं गिरिप्रस्थात्सुनिर्मलम् ॥ ६ ॥

तदुपस्पृशामि, (इति कृच्छ्राद्गत्वा निर्वर्ण्य सनिश्वासं समुपविश्य) हन्त, विधि-विलसितं, नियतिरपि प्रतिकूलैव मे। कष्टं भोः कष्टं, मृग-तृष्णिकायामुदकभ्रान्तिः–

यथा यथा प्रधावामि जलभ्रान्त्या तदन्तिकम्।
विडम्बयन्ती मां दूरं सापि याति तथा तथा ॥ ७ ॥

(सनिश्वासं चेलाञ्चलेनात्मानं वीजयन्परितो विलोक्य) भवतु, नीलनीरदनिभो महीरुहनिवहो नातिदूरे दृश्यते। तत्र गत्वा श्रममपनुदामि (उत्थाय गत्वा) हन्त, दिष्ट्या, जलाशयोऽपि सन्निहित इव–

वाति पयःकणवाही सरसिजसौरभ्यबन्धुरो वातः।
कलहंसकेङ्कारो नन्दयति श्रुतिपथं यतो मन्द्रः ॥ ८ ॥

(परिक्रामति) (नेपथ्ये)

हा हतोस्मि, वनदेवताः, त्रायध्वं त्रायध्वम्।

चन्द्रगुप्तः—(आकर्ण्य सोद्वेगं) निर्जने गहने कोयमार्तनादः।

( पुनर्नेपथ्ये )

हा नियते, न सहे वेदनाम्।

चन्द्रगुप्तः—केनाप्यसत्सधर्मचारिणा भवितव्यम्। (नेपथ्याभिमुखमवलोक्य) हन्त, कोपि तापसवटुरजगरेण निगीर्यते–

अजगरमुखकृष्यमाणजङ्घः
क्षितितलपातितविग्रहोऽश्रुनेत्रः।
कथमपि परिवेष्टते व्यथार्तो
भ्रुकुटितगोधितलोयमुच्छिखाग्रः ॥ ९ ॥

आर्य, अहमस्मि, मा भैषीः। (सरभसं परिक्रामति)

( ततः प्रविशति यथा निर्दिष्टो वटुः )

वटुः—तात, सोढुं न पारयामि वेदनाम्।

चन्द्रगुप्तः—अलमावेगेन, वाहसेस्मिन्साहसं क्रियते (इति खङ्गेनाजगरं विदार्य वटुमुपवेश्य) आर्य, प्रक्षाल्य जलाशये शोणितरूषितं पाणियुगलमनुपदमेवागमिष्यामि। तद्विश्रान्तिमनुभवतु भवान्प्रच्छाये (इति सखङ्गो निष्क्रान्तः)

वटुः—(दीर्घं निश्वस्य) अहो विधिविलसितं, क्वेदमरण्यं, क्व स महात्मा राजकुमारः।

( ततः प्रविशति सचिन्तश्चाणक्यः )

चाणक्यः—किन्नु खल्विदं, इयता कालेनापि सम्पादितसमित्कुशसम्भारः प्रतिदिनमिव न प्रतिनिवृत्तश्शार्ङ्गरवः, मध्यन्दिनमप्यतिक्रान्तं, तथाहि—

खगा वृक्षे निद्राविरतिधुतपक्षा मितरवा-
स्तरोश्छाया मूलात्पथिक इव विश्रम्य सरति।
रविः प्राचीं किञ्चित्ककुभमवलोक्य स्फुटकरैः
प्रयाणे स्वां कान्तां परिमृशति सान्द्रैरिव पुमान् ॥ १० ॥

स प्राणिति वा न वा, भवतु, शब्दापयामि, भोश्शार्ङ्गरव, शार्ङ्गरव।

वटुः—अयमहमस्मि भोः।

चाणक्यः—(विलोक्य) दिष्ट्या, जीवति वत्सः, (उपसृत्य निर्वर्ण्य सावेगं) तात, किन्नु खल्विदम् ?

( वटुः—वेदनामभिनयन्प्रत्युत्थानायोद्युङ्क्ते )

चाणक्यः—अलमलं प्रत्युत्थानेन, उपविशन्नेव कथय तावत्।

वटुः—भगवन्, समिधाहरणार्थमत्र पृथुलशाखाधिया सविस्रम्भं विनिहितचरणो गृहीतस्तावदनेनाजगरेण।

चाणक्यः—हन्त, महदिदं कष्टं, भवतु, केन मोचितोसि ? (अजगरमवलोक्य) हन्त, केन विदारितोयमद्रिनिभोऽजगरः ?

वटुः—केनाप्यतर्कितोपनतेन खङ्गहस्तेन बालेन।

चाणक्यः—(सश्लाघं) क्वेदानीं स महात्मा ?

वटुः—रक्ताविलपाणिप्रक्षालनाय जलाशयं गतः।

चाणक्यः—तेन धीरेण भवितव्यं, त्वरयति मां तद्दिदृक्षा। (नेपथ्याभिमुखमवलोक्य सानन्दं)—

गम्भीरप्रकृतिर्मृगेन्द्रगमनः कन्दर्पदर्पापह-
स्तेजोदर्शितसार्वभौमपदवीदाक्ष्यश्च धीराग्रणीः।
द्रष्टुर्मे तुहिनांशुवच्छिशिरयंश्चक्षुर्वनाभ्यन्तरा-
दभ्येत्यम्बुजलोचनः पटुतरः कोप्येष बालो वली ॥ ११ ॥

चन्द्रगुप्तः—(प्रविश्य) (चाणक्यं निर्वर्ण्य) अये, तपोधनः—

मधुवर्णस्फुरच्छ्मश्रु कूर्चस्फीतजटाभरः।
सत्वोत्कर्षज्वलद्वक्त्रः कोऽयं केसरिसन्निभः ॥ १२ ॥

(उपसृत्य) भगवन्, अभिवादयते मन्दभाग्यश्चन्द्रगुप्तः (प्रणमति)

चाणक्यः—पूर्णभाग्य इत्युच्यतां, एहि वत्स, दृढमालिङ्ग्यानन्दय मां। (इति तमुत्थाप्य समाश्लिष्य, स्वगतं)—

गात्रस्पर्शोस्य बालस्य विचित्रस्साधु शंसति।
वसुन्धराधिपत्यस्य दक्षतां भाविनीं बत ॥ १३ ॥

चन्द्रगुप्तः—(साञ्जलिबन्धं) द्वेषिद्वीपिग्रस्यमानोयं दासजनस्तत्रभवद्भिर्भवद्भिः परिपालनीयः।

चाणक्यः—वत्स, मा भैषीः, चाणक्योहमस्मि, तदायाहि मदुटजं, निवेदय तावत्तवान्तश्छिद्राणि।

चन्द्रगुप्तः—अनुगृहीतोस्मि, यथादिशति भगवान्। (मन्दं वटुमुत्थापयति)

चाणक्यः—( गृहीतशार्ङ्गरवपाणिना चन्द्रगुप्तेन सह परिक्रामति। )

चन्द्रगुप्तः—(अग्रतोवलोक्य स्वगतं) अहो, तपोधनस्योटजसम्पत्—

कुटिलसुषिरस्थाणुस्तम्भं दिवाकरशोषितैः
पवनमुखरैः पत्रैश्छन्नच्छदित्रुटितातपम्।
पथिकगमनश्रान्तिच्छेदिप्रलिप्तवितर्दिकं
विलसति गृहं गोविट्पूतं समित्कुशसम्भृतम् ॥ १४ ॥

चाणक्यः—(उटजं प्रविश्य) शार्ङ्गरव, अजिर एव शयानो विश्रान्तिमनुभव।

शार्ङ्गरवः—यथादिशन्त्याचार्याः। (अजिरे मन्दमुपविशति)

चाणक्यः—वत्स, इतस्तावत्।

चन्द्रगुप्तः—(अभ्यन्तरं प्रविश्य) अयमस्मि।

चाणक्यः—(चन्द्रगुप्तेन सहोपविश्य) वत्स, निवेदय तावत्, किमर्थमीदृशे वयसि वनमिदमेकाकी प्रविष्टोसि ?

चन्द्रगुप्तः—वैमात्रेयकुतन्त्रेण।

चाणक्यः—कस्ते तातः।

चन्द्रगुप्तः—कुसुमपुराधीश्वरस्सर्वार्थसिद्धिः।

चाणक्यः—स तु श्रुतपूर्व एव, तस्यामात्यराक्षसः प्रधानसचिवः खलु।

चन्द्रगुप्तः—आम।

चाणक्यः—ततस्ततः।

चन्द्रगुप्तः—महाराजस्य, द्वे भार्ये, सुनन्देति मुरेति च।

चाणक्यः—विदितमेव सुनन्दा नवनन्दानां जनयित्रीति।

चन्द्रगुप्तः—मुरात्वस्मज्ज्ञातृशतपितामही।

चाणक्यः—वृषला खलु द्वितीया।

चन्द्रगुप्तः—अथकिं।

चाणक्यः—ततस्ततः।

चन्द्रगुप्तः—महाराजस्तावदस्मत्पितरमभिषेक्तुं मन्त्रितवान्।

चाणक्यः—हन्त, अनर्थोदर्कं तर्कयामि, यन्महाराजेन क्षत्रियं विहाय वृषलमभिषेक्तुं मन्त्रितं, ततस्ततः।

चन्द्रगुप्तः—अहो कथं नु चिन्तितमार्येण, तथाहि, यथापूर्वाचारं दुर्गालयं गतस्सपुत्रशतोस्मत्पिता तत्र नन्दैरुपांशुपरिकल्पिते कूटयन्त्रागारे निपातितः।

चाणक्यः—(विचिन्त्य) नन्दपक्षपातिना राक्षसेन निगूढं कृतमेतद्भवेत् कथमिव भवान्परिमुक्तः।

चन्द्रगुप्तः—दैवेन परिच्याचितः।

चाणक्यः—तत्कथमिवेति।

चन्द्रगुप्तः—सपुत्रशते पितरि प्रविष्टे कूटयन्त्रागाराभ्यन्तरं, सर्वापेक्षया पृष्ठवर्तीत्वहं यावन्निक्षिपामि शिलाभ्यन्तरे चरणं, तावदपतत्कवाटं, अनुपदमेव समाश्रिता जङ्घालता मया।

चाणक्यः—अहो विधिविलसितं, न कस्यापि गोचरतां गतो भवान्।

चन्द्रगुप्तः—दिष्ट्या नावलोकितः।

चाणक्यः—(गगने लक्ष्यं बध्वा) साधु राक्षस साधु, श्लाघनीयोसि बुद्धिविभवेन—वत्स, मा भैषीः—

प्रज्ञाकृपाणेन निहत्य नन्दा-
न्राज्येऽभिषिच्य प्रथितं भवन्तम्।
त्वत्सन्निधौ तं सचिवावतंसं
संस्थापयिष्याम्यचिरादधीनम् ॥ १५ ॥

(इति चिन्तयन्नुपविशति)

तापसवेषधारी प्रणिधिः—(प्रविश्य) (दीर्घं निश्वस्योदरं परामृशन्)—

धिग्जठरं धिग्जठरं यद्भरणायैव दास्यपरिभूतः।
अटवीमटामि रात्रं दिवमपि मिथ्यातपोधनो भूत्वा ॥ १६ ॥

हन्त, दिगन्तरप्रेषितानां प्रणिधीनां मध्ये तावदहमेव मन्दभाग्यः, यदेवमाज्ञप्तोस्म्यमात्यराक्षसेन, भोश्चण्डवर्मन्, परिगृहीततापसवेषेण भवता महारण्येऽन्वेषणीयस्स चन्द्रगुप्त इति, (आत्मानं निर्वर्ण्य)—

काले काले नैव भुक्तिर्न निद्रा
कान्तारेस्मिन्गच्छतो मे शरीरम्।
वृष्ट्या क्लिन्नं शोषितं भास्वदुस्रैः
शीर्णं वातैर्दारुकल्पं हि जातम् ॥ १७ ॥

स चन्द्रगुप्तहतकस्तु नैवोपलब्धः, किं करोमि (परितो विलोक्य) हन्त, अवसितमहः—

रन्ध्रान्वेषणतत्परेण सुचिरं कालेन खे धावना-
च्छ्रान्तस्यास्तमहीध्रमस्तकजुषश्शीर्णोस्रबर्हावलेः।
अङ्गारेष्वरुणोज्वलाभजलमुग्रूपेषु सम्पातित-
स्संरक्तामिषपिण्डवद्विवलते बिम्बः पतङ्गस्य यत् ॥ १८ ॥

तदिदानीं पतत्रिवन्मयापि क्वापि समाश्रयणीयः तरुकोटरः, (अग्रतो वलोक्य सहर्षं) दिष्ट्या, नातिदूरे दृश्यते कस्यापि पर्णशाला, (परिक्रम्य) कः कोत्र भोः।

बहिरागत्य शाङ्गरवः—तिष्ठतु भगवान्, आचार्याय निवेद्यान्तःप्रवेशयामि, (अन्तः प्रविश्य) कोपि तापसो भवद्दिदृक्षया द्वारि तिष्ठति ।

चाणक्यः—(चन्द्रगुप्तमभ्यन्तरं सम्प्रेष्य) शाङ्गरव, प्रवेशय तावत्तपोधनं ।

शाङ्गरवः—तथा—(प्रवेशयति)

तापसः—(उपसृत्य) अपि निर्विघ्नं तपः ।

चाणक्यः—(उत्थाय) अथ किं ? (आसनं ददाति)

(तापसः—उपविशति)

चाणक्यः—(उपविश्य) शंसति भवतां मुखकमलं सुदूरगमनखेदम् ।

तापसः—भूप्रदक्षिणार्थं सुबहून्पुण्यतीर्थपवित्रान्देशान्परिभ्रमन्मध्येमार्गं कुसुमपुरे नन्दैस्सत्कृतो नीतपञ्चषदिवसस्समागतोऽस्मि ।

चाणक्यः—(स्वगतं) अस्मात्कुसुमपुरवृत्तान्तो ज्ञातव्यः । (प्रकाशं) अपि धर्म्यै पथि वर्तन्ते नन्दाः ।

तापसः—( स्वगतं ) किमलीकं कथयेयमुत सत्यम् । ( विचिन्त्य ) अत्र तथ्योक्त्या न कोपि प्रत्यवायो हि । तत्तथ्यमेव कथयामि । येन मे पिहिता भवति प्रणिधिता ( प्रकाशं ) किं कथयेयम् ? सर्वथा पितृमनोनुवर्तिनस्तच्छोकानलोपशमनरता वर्तन्ते ।

चाणक्यः—शोकनिदानं किम् ?

तापसः—सपुत्रशतस्य मौर्यस्य निधनमेव ।

चाणक्यः—कथं, उपरतस्सपुत्रशतो मौर्यः ?

तापसः—अथ किम् ?

चाणक्यः—किं रुजा, उत शस्त्रेण ?

तापसः—न रुजा, नापि शस्त्रेण, अपित्वनशनेन ।

चाणक्यः—सुस्पष्टं निवेदय ।

तापसः—उपांशु कपटेन कूटयन्त्रागारे निपातितेभ्यस्तेभ्यो नैव दापितं मुष्टिमेयमप्योदनं नृशंसैर्नन्दैः ।

चाणक्यः—हन्त, धूर्तानां दारुणं कर्म, न कोपि जीवति किमु मौर्यशते ?

तापसः—क्वापि जीवेन्मौर्यस्य ज्येष्ठः कुमारश्चन्द्रगुप्तः ।

चाणक्यः—क्वापीति नाम ?

तापसः—स तु धीमान्कथमपि पलायितः, इति ज्ञायते ।

चाणक्यः—अपि नाम क्रियते यत्नस्तदन्वेषणे ?

तापसः—प्रणिधिमुखात् । (इत्यर्धोक्ते स्वगतं) हन्त, मे प्रमादः । भवतु तावत् । (प्रकाशं) स तु बाल इति सर्वैरुदासितः ।

चाणक्यः—बालोयमिति वैधेया व्रजेयुः क्षीवतां शठाः ।
अल्पोप्यग्निर्मरुत्साह्यो न किं दहति काननम् ॥ १९ ॥

सर्वार्थसिद्धिः कथम् ?

तापसः—जीवितजिहासयानशनव्रतपरां मुरां सान्त्वयन्सर्वथा सर्वदा न जहाति ताम् ।

चाणक्यः—हन्त, वार्धके महानुपनतश्शोकः, ततस्ततः ।

तापसः—श्वः प्रभृति प्रचलिष्यति कुसुमपुरे शरन्महोत्सवः ।

चाणक्यः—अप्यनुरक्ताः प्रजा नूतने राजनि ।

तापसः—अथकिं ? महदिदमाश्चर्यम् ।

चाणक्यः—कथय, किं तत् ?

तापसः—महोत्सवकृते समाहूतस्सुहृत्सिह्मलेश्वरः सिह्मवर्मा प्रकटितकार्यान्तरो दृढपञ्जरप्रवेशितं केसरिणमेकं लेखेन समं प्रेषितवान् ।

चाणक्यः—अपि नाम जानासि लेखविषयम् ?

तापसः—समुपनतमहत्कार्यान्तरतया महोत्सवभागी भवितुं नावकाशः । इदं तु प्रेषितमुत्सवाङ्गतया, अयन्तु सिह्मो न खादति नापि पिबति । अपि तु दर्शिताग्रशलाकिकाप्रोतपिशितपिण्डदर्शनमात्रेण विचलयति कन्धरां तज्जिघृक्षया । यस्त्वनुद्घाटितकवाटात्पञ्जरादेनं बहिर्द्रावयति, तस्मै धीमते भवद्भिर्देयो भवद्राज्ये महानधिकार इति, इति ।

चाणक्यः—किमु तत्कर्म महोत्सवे ?

तापसः—अथकिं, हन्त, अतिक्रान्ता सन्ध्योपासनवेला ।

चाणक्यः—गच्छतु भवान्, सन्ध्योपासनाय, शार्ङ्गरव, प्रदर्शय तावदस्मै निकटवर्तिनीं सरसीम् ।

शार्ङ्गरवः—तथा (तापसेन परिक्रामति)

तापसः—(गगनमवलोक्य) हन्त, नक्षत्राण्यप्युल्लसन्ति, तथाहि–

रविकरपरिमर्शाल्लग्नतेजस्स्फुलिङ्ग-
भ्रममुपजनयन्त्यस्तारका नाकभाण्डे ।
पवनसखशलाकाघर्षणाद्गन्धकाक्ते
फलक इव सुलग्नाः कान्तिलेखा लसन्ति ॥ २० ॥

( इति शार्ङ्गरवेण निष्क्रान्तः )

चाणक्यः—वत्स, इतस्तावत् ।

चन्द्रगुप्तः—(सबाष्पं प्रविश्य) हा हतोस्मि, भगवन्, सर्वे हताः ।

चाणक्यः—अलं, परिदेवनेन, चलितं तु चलितमेव, तत्प्रकृतमनुसर, द्रक्ष्यन्ति ते धूर्ता निजनृशंसतानुरूपं फलम् ।

चन्द्रगुप्तः—यथादिशति भगवान् ।

चाणक्यः—अपि जानासि कोयमिति ?

चन्द्रगुप्तः—कोपि तपोधनः खलु ?

चाणक्यः—हुं, मन्दप्रज्ञोसि, राक्षसप्रणिधिरयम् ।

चन्द्रगुप्तः—तत्कथमवगतम् ?

चाणक्यः—(सस्मितं) तद्वचनपरिपाटी कथयति ।

चन्द्रगुप्तः—तत्कथमिति न जाने ।

चाणक्यः—उत्तानहृदयोसि, पञ्जरसिंहद्रावणकृतन्त्रप्रयोगो राक्षसकृत एव ।

चन्द्रगुप्तः—तेन किं प्रयोजनम् ?

चाणक्यः—भवद्ग्रहणमेव ।

चन्द्रगुप्तः—तत्कथमिव ?

चाणक्यः—मन्यते तावद्राक्षसः, भवन्तं धीमन्तं, तदद्य, तद्दिदृक्षया वा, तच्चिकीर्षया वा, तत्र भवदागमनमवश्यंभावीति, अत एव प्रणिधिमुखादुद्घोष्यते ।

चन्द्रगुप्तः—युक्तमभिहितं भगवता, तत्कथं तद्विद्रावणम् ।

चाणक्यः—सिक्थमयो वा, जतुमयो वा, भवेत्स सिह्मः, तद्वक्त्राभ्यन्तरे स्यादयस्कान्तमणिः ।

चन्द्रगुप्तः—(स्वगतं) अहो भगवतो बुद्धिवैभवं, (प्रकाशं) उपपन्नम् ।

चाणक्यः—परिगृहीततापसवटुवेषस्तद्भवाञ्श्वः कल्य एव प्रयातु कुसुमपुरम् ।

चन्द्रगुप्तः—ततः ।

चाणक्यः—(कर्णे) एवमिव, अहन्तावदनन्तरकरणीयं करिष्यामि ।

चन्द्रगुप्तः—अनुगृहीतोस्मि ।

चाणक्यः—वत्स, यास्यामस्सन्ध्योपासनाय कासारान्तरम् । (इत्युत्थाय, आकाशे लक्ष्यं वध्वा ''बालोऽयं'' इति पूर्वोक्तमेव पठंश्चन्द्रगुप्तेन निष्क्रान्तः)

( निष्क्रान्तास्सर्वे )

तृतीयोऽङ्कः ।

---

## चतुर्थोऽङ्कः

(ततः प्रविशति दण्डपाणिः कञ्चुकी)

कञ्चुकी—किं कथयेयं सेवाया वैभवं ? प्रह्वत्वं तावदस्माद्दशानामेव परिकल्पितं नियत्या, स्यादेतत्, केवलमवज्ञाकरं पूर्वेद्युः कृतं कर्म वक्तुमपि जिह्रेमि—

बाल्यात्प्रभृत्यवनतेर्वनितासकाशे
संस्काररूढविनयस्सदनेपि नैच्यम् ।
जायान्तिके प्रकटयन्परिहासपात्र-
मासं पुमानिति चरामि तथाप्यलज्जः ॥ १ ॥

हन्त, सेवया शुनकसधर्माणः कृता वयं, (विहस्य) अथवा किमित्यात्मानमुपालभामहे, वयन्तावद्वृत्या समतिक्रान्तयोगिनस्संवृत्ताः—

पश्यन्तो लोष्टकल्पं क्षुरिपतितमपि स्वर्णरत्नादिवस्तु
स्वर्नारीस्पृह्यरूपास्तरुणिमविलसन्मन्मथाः कामिनीश्च ।
व्यालीवद्भावयन्तो बहुविषययुते सौध एवात्तवासाः
लोलं चित्तं निगृह्य प्रशमितविषयिव्रातचेष्टास्स्थिता यत् ॥ २ ॥

(समन्दस्मितं) किमात्मनश्श्लाघया निन्दया वा, प्रकृतमनुसरामि। आज्ञतोऽस्मि महाराजेन, "अयि जाजले, शरन्महोत्सवकृते सज्जा समलङ्कृता नगरी न वेति ज्ञायतामिति तत्प्रभुनियोगमनुतिष्ठामि। (परिक्रम्य नेपथ्याभिमुखमवलोक्य) कृतककेसरिवृत्तोद्घोषणाय यातश्चण्डाक्षः कण्ठलम्बितपटह इत एवाभिवर्तते, तच्चण्डालसामीप्यं परिहरामि (किञ्चिदपसरति)

(ततः प्रविशति यथानिर्दिष्टश्चण्डाक्षः)

चण्डाक्षः—(असकृत्पटहं शब्दापयन्) ओशळेह, ओशळेह, शुणुह मणुश्शा शुणुह—

वट्टइ णळवइगेहे
पंजळमच्झप्पवेशिदे शींहे।
पिहिदकवाडादो दं
द्दाविदवंतश्श होइ अहिआळे ॥ ३ ॥

(छाया—अपसरतापसरत, श्रृणुत मनुष्याश्शृणुत—

वर्तते नरपतिगेहे पञ्जरमध्यप्रवेशितस्सिंहः।
पिहितकवाटात्तं द्रावितवतो भवत्यधिकारः) ॥ ३ ॥

कञ्चुकी—रे, अपि नामोद्घुष्टं सर्वत्र।

चण्डाक्षः—हंहो, अय्ये, (सविनयं) अहइं, (शिरसि हस्तयुगलमाधाय सदैन्यं) प्पहो, प्पहादादो प्पहुदि णअळं प्पळिब्भमंतेण मए ण तंबुळे वि चव्विदे, ताळताळं कोशंतश्श मह जीहा शुःक्खा जादा, ता तंबुळकिदे एक्कं देहि काअणिअं। (छाया—अंहो, आर्यः, अथकिं, प्रभो, प्रभातात्प्रभृति नगरं परिभ्रमता मया न ताम्बूलमपि चर्वितं, तारतारं क्रोशतो मम जिह्वा शुष्का जाता, तत्ताम्बूलकृते एकां देहि काकणिकां।)

कञ्चुकी—(विहस्य स्वगतं) दयनीयोयं, यतस्ताम्बूलमात्रेण सुहितो भवति, हन्त, प्रायो जगति निदानमभ्यास एव व्यसनानां हि—

रिक्तोपि पानसक्तो याति कथञ्चित्प्रपां समासाद्य।
न हि गृहिणीसुतचिन्ता स्वान्तं तस्याधिरोहति कदापि ॥ ४ ॥

(प्रकाशं) दीयते ताम्बूलमेव, गृहाण। (क्षितितले निक्षिप्यापसरति)

**चण्डाक्षः**—(आदाय) अय्यप्पशादादो देव्वजोग्गो एव्व तंबुले ळद्धे, (साञ्जलिबन्धं) णिवेदेदु अय्ये, उग्घुट्ठे चंडक्खेण शव्वत्त, त्ति। (छाया—आर्यप्रसादाद्देवयोग्यमेव ताम्बूलं लब्धं, निवेदयत्वार्यः, उद्घुष्टं चण्डाक्षेण सर्वत्रेति)

**कञ्चुकी**—(विहस्य) रे, मया किमु त्वन्नियोगोप्यनुष्ठेयः।

**चण्डाक्षः**—(साञ्जलिबन्धं) मळिशदु अय्ये, ण मए किदे णिओए, किंदु पत्थिदे, जदो हगे देव्वश्श पच्चक्खे ठादुं वि, अक्खमे खु, (छाया—मृष्यत्वार्यः, न मया कृतो नियोगः, किन्तु, प्रार्थितं, यतोहं देवस्य प्रत्यक्षे स्थातुमप्यक्षमः खलु)

**कञ्चुकी**—तथास्तु, गच्छ।

**चण्डाक्षः**—अणुगहीदे हगे, (निष्क्रान्तः) (छाया—अनुगृहीतोऽहं)

**कञ्चुकी**—(प्राचीं विलोक्य) अहो, चन्द्रोप्युदित एव, तथाहि—

ततगगनतटाके तारकाकैरवाढ्ये
प्लवनकृतमनस्को लम्बितारक्तपादः।
उदयशिखरिकूलाद्यामिनीनाथहंस-
श्चरति रुचिगरुद्भ्यां ध्वान्तशैवालमस्यन् ॥ ५ ॥

तद्देवाय विज्ञापयामि (निष्क्रान्तः)

(मिश्रविष्कम्भः)

(ततः प्रविशति सिह्मासनोपविष्टोऽनुजैस्सह नन्दः)

**नन्दः**—(भ्रातृवर्गमवलोक्य) यतः प्रणिधिभिरपि नोपलब्धा चन्द्रगुप्तस्थितिः, तत्तर्कयास्युपरत इति।

**एकः**—(विहस्य)—

पितृबन्धनान्निरवलम्बनस्सुधी-
रपि घातुकैर्मृगगणैर्निषूदितः।
विपिने भयानक इतः पलायित-
स्स भवेदपीत्यहमवैमि शात्रवः ॥ ६ ॥

अपरः—(सश्लाघं) आर्य,

किं सेनया रथगजाश्वपदातिभाजा
किं वामितैः प्रहरणैर्निशितैरमोघैः ।
प्राकारतश्च परिखावलयेन किं नः
स्याद्राक्षसस्य धिषणा (यदि) शत्रुहन्त्री ॥ (ब्रुवीतिवा) ॥७॥

अन्यः—युक्तमभिहितमार्येण,–

राक्षसमतिश्रिताना-
मस्माकं नैव शस्त्रहतिखेदः ।
सेनाव्यूहनिबन्धे
नापि श्रान्तिर्वयन्तु जयशीलाः ॥ ८ ॥

अन्यतमः—तदितः परं निष्कण्टकस्य राज्यशाखिनः फलमनुभविष्यामः यतस्तन्मूलवासी व्यालस्सुदूरं निष्कासितोऽमात्यजाङ्गलिकेन ।

अपरः—कथय निषूदित इति ।

कञ्चुकी—(प्रविश्य) (सविनयं)

उदयमुपगतस्सपूर्णचन्द्रः
कुवलयहासनिदानमुज्वलाङ्गः ।
यदुदयसमवेक्षणात्प्रजानां
भवति सुखं शमितात्मखेदजालम् ॥ ९ ॥

नन्दः—(जनान्तिकं) हन्त, कथं, चन्द्रगुप्ताभ्युदयोप्यनेन हृदयमारोपितः ।

भ्रातरः—(जनान्तिकं) नैव चिन्तनीयमेवमार्येण ।

कञ्चुकी—तदिदानीं–

कनत्कनकसालकप्रकटसोमबिम्बावलिं
सितस्फटिककुट्टिमद्विगुणिताच्छचन्द्रातपाम् ।
दुकूलपरिगुण्ठितप्रथितभद्रपीठोज्वलां
विकीर्णनवमल्लिकां व्रजतु चन्द्रशालां प्रभुः ॥ १० ॥

नन्दः—(भ्रातॄनवलोक्य) अपिनाम चन्द्रशालां गत्वा कुसुमपुरसौभाग्यमनुभवामः, (उत्थाय तैस्सह परिक्रम्य) जाजले, चन्द्रशालामार्गमादर्शय ।

कञ्चुकी—इत इतो देवः,

नन्दः—(परिक्रम्य चन्द्रशालामधिरुह्य तद्वरणमण्डलशिखरे पाणिं निधाय) पश्यन्तु वत्साः, पुरीं,

दुग्धैस्सिक्तामिव हिमकरोद्योतशुभ्रां युवानो
मत्ता वीणामुरलिनिनदैश्चन्द्रशालां प्रविष्टाः ।
मल्लीमालां धवलवसनं शुभ्रमुक्ताकलापं
बिभ्राणाभिस्सह युवतिभिर्ह्लीनताभीरमन्ते ॥ ११ ॥

अन्यः—चित्रमिदं पश्यत्वार्यः—

सितशिरोगृहसन्ततिसालके
कृतपदा मधुरा गृहकेकिनः ।
युवतिनर्तनचोदितताण्डवाः
प्रविलसन्त्यभिधूपलतावृताः ॥ १२ ॥

अपरः—इतस्तावदक्षि निक्षिप्यतामार्येण शृङ्गाटके—

चञ्चद्दुकूलकलितोरुनितम्बलम्बि
काञ्चीक्वणन्मणिकलापविकीर्णशोभाः ।
मञ्जीरझङ्कृतिलयाहितशोणपादा-
श्चन्द्रातपे तत इतो विचरन्ति वेश्याः ॥ १३ ॥

नन्दः—(निर्वर्ण्य सस्मितं) पश्यन्तु भवन्तो जरद्विटानां चेष्टितं—

वृद्धा विटाः कृतपटीररसाङ्गलेपाः
वाराङ्गनास्तरुणिमोज्ज्वलमन्मथास्ताः ।
गण्डूषतो गलितदन्तमुखासवस्य
शश्वत्कृतानुसरणाः पथि कोपयन्ति ॥ १४ ॥

भ्रातरः—(सहासं) शरन्महोत्सवातिशयस्तावदेतैस्सुष्ठु प्रकाश्यते ।

पुरुषः—(प्रविश्य) (सविनयं) देव—

धूपालीढवितानलम्बितचलन्मुक्ताकलापाञ्चिते
नानावर्णविचित्रदीपनिकरैस्तारानिभैर्मण्डिते ।
पौरैरद्भुतकर्मदर्शनकृते व्याक्रान्तसीमास्थले
निक्षिप्तं धुरि पञ्जरं हरियुतं सातोद्यकं मण्टपे ॥ १५ ॥

नन्दः—अपि नाम तत्रापि कञ्चित्कालं मनो विनोदयामः ।

इतरे—तथास्तु, जाजले, मण्टपमार्गमादर्शय।

कञ्चुकी—इत इतो देवः।

नन्दः—(भ्रातृभिस्सह परिक्रम्य सपरिच्छदो मण्टपं प्रविश्य) वत्साः, पश्यत—

मदागमनसम्भ्रमाद्युगपदुत्थितानां नृणां
शिरोभिरभितोप्ययं लसति मण्टपो जीविवत्।
स्फुरद्रुचिरदीपिकासितरदालिमन्दस्मितः
स्वनैर्विविधवाद्यजैरपिसुखीति पृच्छन्निव ॥ १६ ॥

(इत्यासने समुपविशति) (सर्वेप्युपविशन्ति)

(केचन सिह्मद्रावणे निष्फलयत्नाः प्रतिनिवर्तन्ते)

परिगृहीतवटुवेषश्चन्द्रगुप्तस्समुत्थाय—भो भोस्सभ्याः—

पञ्जरात्कृतकवाटकाद्धरिं द्रावयामि मतिवैभवादिह।
अद्भुतां समवलोक्य मत्क्रियां यूयमाप्नुत मुदन्त्वहं पदम् ॥१७॥

कश्चिद्ब्राह्मणः—(सरभससमुत्थाय) अलं साहसेन, इदं कर्म, न निमन्त्रणं, नाप्यक्षमालापरिवर्तनं। (उपविशति)

अन्यो ब्राह्मणः—महदिदमाश्चर्यं, यत्तपस्विकुमारस्याप्यधिकारलिप्सेति।

कश्चिज्जरद्ब्राह्मणः—(दण्डमवलम्ब्योत्थाय) वत्स, किंबहुना—

देशकालसुविमर्शनशक्तिर्नैध्मदर्भशिरसस्तव तात।
तन्निषीद कृतिनामपि कार्ये दुष्करे विरम मास्त्वधिकारः ॥१८॥

चन्द्रगुप्तः—प्रतीक्ष्याः।

पुरुषायत्तो यत्नो नियत्यधीनं भवेद्धि तस्य फलम्।
तत्क्रियते कर्तव्यं न हि मम दृष्टिर्ध्रुवं फलाफलयोः ॥ १९ ॥

नन्दः—कथं, चन्द्रगुप्त इव, तेनैव वटुवेषधारिणा भवितव्यं।

तद्रूपसंवादि वटोर्हि रूपं
तत्कण्ठनादप्रतिमोस्य नादः।
सैवास्य चेष्टा बत चन्द्रगुप्ते
मयानुभूतं सुचिरं च यद्यत् ॥ २० ॥

भ्रातरः—आर्यस्य तावन्निरन्तरस्मरणादेवं, कथं प्रमीतस्यागमनं।

5

नन्दः—द्विजवर्याः, न कस्याप्यत्र निरोधः, तद्द्रावयतु नाम।

(चन्द्रगुप्तः—उपसृत्य तप्तशलाकया विलापयति केसरिणं)

सर्वे—(सहस्ततालं) अहो, प्रतिभावैभवं तावद्बटोः।

चन्द्रगुप्तः—राजन्, द्रावितोयं सिंहः, यथासमयमनुष्ठीयताम्।

( पूर्वमुत्थिताः परिगणिताः पौराः ससम्भ्रममुत्थाय विकटं स्थित्वा )

प्रभो, नाधिकारदानावकाशः, यतो विलापितः, न तु विद्रावितः।

ब्राह्मणाः—(सक्रोधं) नागरिकाः, अलं वाचाटतया, अनरालशीलस्य तापसवटोरलं प्रतारणेन, विलापनार्थकं खलु द्रावणं।

चन्द्रगुप्तः—(सविनयं) भोस्सभ्याः, अनुद्धाटितकवाटात्पञ्जरान्निष्कासनस्य न खलु गत्यन्तरं, विलापनमन्तरा, अत एव द्रावयतीत्युक्तं, अचेतनः कथं धावेत्।

नन्दः—(जनान्तिकं) वत्साः, चन्द्रगुप्त एवायं, न कापि विचिकित्सा, दिष्ट्यास्मद्दृष्टिपथमारूढोयं, (कर्णे) एवमिव (प्रकाशं) सभ्याः, अलं विवादेन, नैपुण्यावलोकनतुष्टैरस्माभिर्दत्तस्तावद्बर्णोचितस्सत्राधिकारः।

पौराः—यथा रोचते महाराजाय।

नन्दः—कः कोत्र भोः।

प्रधानाधिकारी—(उपसृत्य) आज्ञापयतु महाराजः।

नन्दः—वटुमेनं प्रापयान्नसत्रं, तत्र यथाधर्मं निर्वर्तयतु कार्यकलापम्।

(इत्युत्थाय सानुजस्सपरिच्छदो निष्क्रान्तः)

पौराः—(उत्थाय परस्परं) भाग्यवानयं कुमारः। (निष्क्रान्ताः)

चन्द्रगुप्तः—(अधिकारिणा सह परिक्रम्यान्नसत्रं प्रविश्य) अहो, अन्नसत्रवैभवं—

अन्तस्संस्कृततेमनाक्तविसरद्धिङ्गूच्चगन्धावृता
प्रत्यावर्तयति क्षणाद्रसवती वेश्येव पान्थान्बहून्।
भूदेवैः परिवेषणोदयरतैः द्राक्स्थीयते पंक्तिशः
सूदैस्सादरमर्थ्यते घृतरसापूपोदनादि क्रमात् ॥ २१ ॥

अधिकारी—इदमेवान्नसत्रं, तदुपविशतु भवान्भवदासने।

चन्द्रगुप्तः—तथा। (उपविशति)

कायस्थः—(सविनयमुपसृत्य)स्वामिन्, अहमस्मि कायस्थः, तद्रक्षणीयोऽयं दासजनः।

चन्द्रगुप्तः—अभिरक्षत्यस्मत्प्रभुस्सर्वानपि, अनतिक्रान्तमहाराजनियमस्य ते न कस्मादपि भीतिः। तन्नियुक्ते कर्मणि प्रवुद्धो भव।

कायस्थः—यथादिशति (परिक्रम्य स्वगतं) नूतनोयमधिकारी, तन्मया पुनरिदानीं चिरान्मिथ्यालेखनपूरिता पुस्तककन्था समीकरणीया, अन्यथा, स्थानच्युतिर्मे चेलाञ्चलनिबद्धैव (इति निष्क्रान्तः)

ब्राह्मणाः—(भोजनसुहितास्ताम्बूलपाणयो) (उपसृत्य) दिष्ट्या, वर्धसे इतः परमितोपि साधु प्रचलिष्यति ब्राह्मणसपर्या, यतो भवानधिकारी।

चन्द्रगुप्तः—(उत्थाय साञ्जलिबन्धं) सर्वमत्रभवतां भवतामनुग्रहः। महाराजेनैव सर्वं साधु परिकल्पितं, तदाज्ञानुवर्ती खल्वहं, तदविचलनमवलोक्यते मया।

ब्राह्मणाः—तथैवास्तु, तदपि कृच्छ्रसाध्यं खलु। (निष्क्रान्ताः)

अधिकारी—अपि गमनानुज्ञा।

चन्द्रगुप्तः—गच्छतु भवान्।

अधिकारी—अत्र तावदप्रमत्तेन भवता भवितव्यं (निष्क्रान्तः)

चन्द्रगुप्तः—कथं, नीरवं जातमिदं, (परितो विलोक्य) अहो, स्वपन्ति सर्वेपि (सानुकम्पं) अनुकम्पनीयकर्माणो ह्येते कान्दविकाः—

जलकुम्भभारवहनात्परिस्फुरत्किणकृष्णबाहुशिखराश्च वल्लवाः।
धूतधूमधूम्रवसना हि शेरते पदलग्नपाकगृहभूमला भुवि ॥२२॥

तदहमपि किञ्चिन्निद्रासुखमनुभावमि तावत्। (इति पर्यङ्के स्वपिति)

(नेपथ्ये कलकलः)

चन्द्रगुप्तः—(उत्थाय) अहो, भुजिष्या उषस्येव प्रवुद्धा बद्धादरास्स्वकर्मसु, (सस्मितं) हन्त, अन्तःक्रियमाणानां कर्मणां निनादस्सुखयति श्रुतिपथं, तथाहि—

कूपोदकोद्धरणयन्त्रनिनाद एष
सम्पूर्यमाणपृथुभाण्डरवानुमिश्रः।
हुङ्कारगर्भमुसलाहतिशब्दरम्य-
भ्राम्यद्धरट्टनिनदो विभवं व्यनक्ति ॥ २३ ॥

तत्रस्थः पण्डितः—(प्रविश्य) (प्राचीमवलोक्य)

उदयमधिगतो मयूखजालै-
र्गगनमणिर्निबिडान्धकारवृन्दम् ।
रिपुगणमिव कालयन्दिगन्तं
विशदयति द्विजवर्गमोददाता ॥ २४ ॥

चन्द्रगुप्तः—अहो, प्रातरपि । अहमपि निर्वर्तितस्नानविधिः प्रतिनिवर्तिष्ये । (कायस्थमवलोक्य) यथानियोगमनुतिष्ठ ।

(निष्क्रान्तः)

चतुर्थोऽङ्कः ।

---

## पञ्चमोऽङ्कः

(ततः प्रविशति कायस्थः)

कायस्थः—(पुस्तकमुद्धाट्य) हन्त, प्रायशो मिथ्याबहुलोयं लेखः, किमद्य करोमि, (निर्वर्ण्य) अहो, इमानि हस्ताङ्कनरिक्तानि वितीर्णवस्तुनामलेखनानि पिशुनयन्ति स्वामिने मम तावद्दस्युताम् । कथमिवेदानीं संत्यापयाम्येतानि । (सचिन्तं नेपथ्याभिमुखमवलोक्य) दिष्ट्या, इत एवायान्ति कतिपये ब्राह्मणाः, तदेतैः प्रलोभितैः कथमपि कारयामि हस्ताङ्कनम् ।

विप्राः—(प्रविश्य) भोः किमिदमेवान्नसत्रम् ?

कायस्थः—(सविनयं) अथकिमथकिम् । उपविशन्तु भवन्तः ।

(सर्वे—उपविशन्ति)

कायस्थः—कुत्रत्या यूयम् ?

विप्राः—दाक्षिणात्याः, तीर्थयात्रयागताः ।

कायस्थः—महान्प्रमोदः, अत्रैव कृतभोजनाः प्रयान्तु, (इति पुस्तकं प्रसार्य) क्रियतां तावदत्र हस्ताङ्कनम् ।

एकः—किमर्थं ?

कायस्थः—एवं प्रभोराज्ञा ।

अपरः—(पुस्तकं निर्वर्ण्य) किमिदं पूर्वं यदा कदापि यस्मै कस्मैचिद्वितीर्णानां लिखितानि वस्तुजातानां नामानि, कथमत्र क्रियते हस्ताङ्कनम्।

कायस्थः—(सभयं) न तथा, तथा न। (अन्यस्य पुरः पुस्तकं निक्षिपति)

अपरः—(तस्य हस्तमवलम्ब्य) मा कुरु हस्ताङ्कनम्, किमङ्गीकृतान्यस्माभिरेतानि।

कायस्थः—यदि न क्रियते, तदा भोजनस्यापि नावकाशः।

विप्राः—(सामर्षं) तर्हि सत्रस्वामिनं द्रष्टुकामा वयं।

कायस्थः—(सविनयं) अलममर्षेण, कः कोत्र भोः।

(नेपथ्ये) तण्डुलः पच्यते।

कायस्थः—इतस्तावत्।

सूदः—तण्डुलः पच्यते।

कायस्थः—(सक्रोधं) मूर्ख, इतस्तावत्।

सूदः—(धूमकलुषितेनांशुकेन नयने मार्जयन्प्रविश्य) कष्टं भोः कष्टं तात, महानसे तावदार्द्रेन्धनसंयोगमुपाधिं व्याहरता मयाप्यधुना तार्किकमतमवलम्बितम्।

कायस्थः—(सस्मितं) तर्हि, सद्यः परीक्षार्थमपि मा कुरु पात्रस्य घृतमाधारम्।

सूदः—(सस्मितं) तत्तु मया सिद्धान्तितमेव, पात्रमेव घृतस्याधार इति।

कायस्थः—भवतु नाम, कथमीदृशो भवान्दर्वीकरान्तेवासी संवृत्तः।

सूदः—पाणिनीयेप्यस्ति मे परिश्रमः, अत एवात्र प्रयुक्तो हि कर्मकर्तरिप्रयोगः, "तण्डुलः पच्यते" इति।

कायस्थः—अहो, विधिविलसितं, ईदृशस्यापि कोविदस्य पाकक्रियेति।

(ब्राह्मणास्सवैलक्ष्यं सूदं पश्यन्ति)

कायस्थः—(साञ्जलिबन्धं) शाकसूपादिपरिवेषणेन सन्तोषय तावदेतान्।

सूदः—तथा। (निष्क्रान्तः)

कायस्थः—इदानीं क्रियतां हस्ताङ्कनम्।

विप्राः—(सामर्षं) किमु वयमुदरम्भरयः। (इत्युत्तिष्ठन्ति)

कायस्थः—(सभयं स्वगतं) एते तावदुत्कोचेनैव वशीकरणीयाः। (इत्यवलग्नान्मन्दं द्रविणमादाय तेषां हस्ते निधाय प्रकाशं) इदानीं क्रियतां, मा कुप्यन्तु। (इति पुस्तकं प्रसार्य लेखनीं ददाति)

विप्राः—(सस्मितं परस्परं मुखमवलोक्य हस्ताङ्कनं कुर्वन्ति)

कायस्थः—(स्वगतं) सद्यः प्राणिमि, (इति पुस्तकं पेटिकायां निधाय नेपथ्याभिमुखमवलोक्य प्रकाशं) हन्त, स्वामी समायातः तदभ्यन्तरं गच्छन्तु भवन्तः।

विप्राः—तथा। (निष्क्रान्ताः)

चन्द्रगुप्तः—(प्रविश्य) हन्त पराधीनवृत्त्या कियन्तं कालमेवमत्र मया तावदनुवर्तितव्या धूर्ता इति न जाने, भगवानाचार्यो नाधुनापि सन्निहितः, किं करोमि—

रन्ध्रान्वेषणतत्पराः प्रतिदिनं नन्दाः कथञ्चिन्मयि
प्रागल्भ्याद्धत दोषमुज्वलधियो धूर्ता विचिन्वन्ति ते।
आचार्यस्य नियोगतोऽस्मि सततं नन्दानुवर्ती त्रपा-
त्रासन्यस्तपदोऽस्तदोषशकलो भस्मावृताङ्गारवत् ॥ २५ ॥

(इत्युपसृत्यासने समुपविशति)

(ततः प्रविशति चाणक्यः)

चाणक्यः—अहो, नन्दानां नगरवैभवं—

विपणिश्रिरत्नमणिराशिरञ्जिता
नवहर्म्यशृङ्गनिचितं नभस्थलम्।
इभवृन्ददानजलपङ्किलाजिरा
धनिनो वसन्ति नृपसन्निभा इह ॥ २६ ॥

वत्सस्सत्राधिकारे नियुक्त इति किंवदन्ती, यास्यामस्तावत्तत्रैव (परिक्रम्य विलोक्य)—

मन्नियोगवशगो वृषलोऽयं पारवश्यजनितश्रमभुग्नः।
साहसी तनुबलादपि नेत्रा दम्यतां सुगमितोऽस्ति यथोक्षा ॥२७॥

(इत्युपसर्पति)

चन्द्रगुप्तः—(सहर्षं स्वगतं) दिष्ट्या भगवानाचार्यस्सम्प्राप्तः (सहसोत्थाय प्रकाशं) को भवान्, कुत्रत्यः, किमर्थमिहागतः?

चाणक्यः—(सश्लाघं स्वगतं) साधु वत्स साधु, देशसमयाभिज्ञोसि (प्रकाशं) अहं तावच्चणकाभिधस्य तपोधनस्य तनूजः औत्तरीयाहः, अन्नसत्रदिदृक्षया समायातोस्मि।

चन्द्रगुप्तः—आगच्छतु भगवानभ्यन्तरं, (इति परिक्रम्य)—

परिवेषणाङ्कणमिदं तपोनिधे
घृततण्डुलादिबहुधान्यवेश्म तत्।
इदमप्यमोघरसवन्महानसं
नवनन्दभोजनगृहं कदाप्यदः ॥ २८ ॥

(इति दर्शयति)

(नेपथ्ये) इत इतो देवः

चन्द्रगुप्तः—(सभयं) हन्त, पाकपरीक्षार्थमित एवाभियाति महाराजः, किं करोमि।

चाणक्यः—उपविशामि तावदहं नन्दस्य भद्रपीठे, कथमपि भवानधुनैव गच्छतु मदुटजं, ततश्चानन्तरकरणीयं करिष्यामि।

चन्द्रगुप्तः—तथा। (निष्क्रान्तः)

(चाणक्यः—राजासने पादौ प्रसार्योपविशति)

(ततः प्रविशति सानुजस्सपरिच्छदो नन्दः)

नन्दः—वत्साः—

निरर्थको हि जातो मे यत्नस्सर्वोपि साम्प्रतम्।
दोषलेशोपि नैवास्मिंश्चन्द्रे दृष्टो मया यतः ॥ २९ ॥

भ्रातरः—आर्य, अद्य तावद्यथाकथञ्चिद्यत्किञ्चिद्दोषमुत्पाद्य स्थापयामस्तावद्बन्धनागारे।

नन्दः—(परिक्रम्य परितो विलोक्य) क्व सत्राधिकारी।

कायस्थः—(सभयकम्पं) देव, कस्मैचित्तपोधनाय सत्रं प्रदर्शयितुमभ्यन्तरं प्रविष्टः।

नन्दः—(जनान्तिकं) मन्ये तावत्तदा दैवमसत्पक्ष्यं, यद्यतिवर्तेत सः चन्द्रगुप्तः।

भ्रातरः—आम।

नन्दः—(सानुजोभ्यन्तरं प्रविश्य भद्रासनस्थं चाणक्यमवलोक्य सक्रोधं) कस्त्वं मूर्ख?

चाणक्यः—(सस्मितं) तपोधनोऽहम् ।

नन्दः—इह मत्पीठे निषण्णः कुतः ?

चाणक्यः—भोक्तुम् ।

नन्दः—स्थानमिदं न ते ।

चाणक्यः—यदि तथा कस्यैतत् ।

नन्दः—अस्यैव मे ।

चाणक्यः—पूज्योऽहं भवतोपि तद्वरमिदं पीठं ममैवोचितम् ।

नन्दः—(सदन्तपीडं) वाचाटोऽसि न वेत्सि माम् ।

चाणक्यः—(साट्टहासं) अहमपि त्वां वेद्मि नन्दं प्रभुम् ॥ ३० ॥

नन्दः—(विकटं स्थित्वा सभ्रूभङ्गं)—

प्रभोर्मम धुरीदृशं वचनमुद्गिरन्निस्त्रपः
तपोधन इतीर्यसे क्व तव प्रशान्तिर्मुने ।

चाणक्यः—(सतिरस्कारहासं)—

मुनेर्मम धुरीदृशं कठिनमुद्गिरन्निर्भयो
नराधिप इतीर्यसे क्व मयि ते प्रभोर्गौरवम् ॥ ३१ ॥

नन्दः—(सदन्तपीडं) रे जाल्म, भिक्षामटतस्ते कियद्विकत्थनं (इति चाणक्यं शिरसि गृहीत्वासनादधः पातयति) ।

परिजनाः—हा हा, (परस्परं जनान्तिकं) तपोधनोयं शापाग्निना यदि दहेदेनं, तदानर्थाय ।

चाणक्यः—(सहसोत्थाय विकटं स्थित्वा सदन्तपीडं)—

धिग्जाल्मान्भूतिदृप्तानविनयनिलयान्क्रूरकर्मैकरक्तां-
श्चाणक्यः क्रोधनोयं प्रलयपरिणटद्भर्गदर्पो न यावत् ।
नन्दान्भस्मीकरोति प्रकटितधिषणावैभवस्तावदेता-
न्नैवोद्बध्नाति केशान्नृपुहतककरामर्शलब्धाप्रतिष्ठान् ॥ ३२ ॥

(इत्युद्धतं परिक्रम्य निष्क्रान्तः)

नन्दः—(सक्रोधं) क्व स पापीयान्स्वामिद्रोही वटुः ? (परितः पश्यति)

सर्वे—(ससम्भ्रमं तत्र तत्रान्विष्य) देव, न क्वापि दृश्यते ।

नन्दः—तदन्वेषणे यत्नः कार्यः ।

भ्रातरः—आर्य, क्रोधनस्तपोधनः किं वा करिष्यतीति न विद्मः ।

नन्दः—(सौदास्यं) किं तेन वनवासिना कर्तुं शक्यम् ?

(निष्क्रान्तास्सर्वे)

पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः

(ततः प्रविशति क्षपणकवेषधारी जीवसिद्धिः)

जीवसिद्धिः—(संस्कृतमाश्रित्य) अहन्तावत्तदैवार्यचाणक्येन नन्दान्तिकं प्रेषितोऽस्मि "भो इन्दुशर्मन्, जीवसिद्धिनाम्ना क्षपणकवेषेण कुसुमपुरं गत्वा नन्दसकाशे लब्धविस्रम्भो भव, इति। यदा च कान्तारे चन्द्रगुप्तेन स्वात्मा चाणक्यायत्तीकृतः, (आत्मानं निर्वर्ण्य) हन्त किं कथयेयं राजनीतिवैभवं (विहस्य)—

नग्नीकरोति मनुजं कलुषीकरोति
पङ्कैर्निवेशयति तप्तशिलातले च ।
उत्पादयत्यतुलवालविलुंछनोत्थ-
पीडासहिष्णुतमतां बत राजनीतिः ॥ १ ॥

(विचिन्त्य) भवतु नाम, ममायं वेषो महोपकाराय कल्पते, यत्परिग्रहेणाहमपि राक्षसस्य तथा विस्रम्भभाजनमस्मि, यथा स सचिवाग्रणीर्मामन्तरा नाचरत्युपांशु क्रियमाणमपि राज्यकार्यं, (सवितर्कं) स्यादेतत्, धिगेनं मामीदृशे कठोरे कर्मणि प्रवृत्तम् । धिगिमाञ्च वञ्चनाप्रसवित्रीं कौटिल्यनीतिम्—

बहिर्धर्मादेशं हृदयमतिकापट्यकलुषं
घने वैतृष्ण्यस्य प्रकटनमनासक्तिनटनम् ।
जने विश्वस्तेपि प्रतिदिनमहो द्रोहगणनं
कठोरेयं नीतिश्चणकसुतसृष्टा जनयति ॥ २ ॥

(नेपथ्याभिमुखमवलोक्य) हन्त, इत एवाभियात्यभियातिभयानकस्सेनानायकः, तदात्मानं दर्शयित्वा विघटयाम्यस्य प्रस्थितस्य कार्यं, (इति तिष्ठति)

(ततः प्रविशति सेनापतिः)

सेनापतिः—हन्त, खड्गधारेव राजानुवृत्तिर्भयोत्पादिनी, तत्प्रबुद्धेन परिजनेन भवितव्यं, आज्ञतोऽस्मि महाराजेन, "मृगयायै विपिनं जिगमिषुरस्मि, तत्तदुचितेन बलेन समं भवता सज्जेन भवितव्यं, इति। मया पुनरसकृदाखेटार्थं प्रातारण्येन महाननुभूतः क्लेशः। पुनरपीदानीं तादृशः क्लेशस्समुपनतः, किं करोमि—

सत्वैः क्रूरतरैर्भयेन विवृतस्फीतास्यदंष्ट्राङ्कुरै-
गर्जद्भिर्निबिडीकृते वनतटे वर्षातपव्याकुले।
नानापर्णकषायिताल्पसरसीनीरैरुदन्यामपि
क्रव्यैश्शुष्कतरैः क्षुधं शमयता कालोऽतिवाह्यो मया ॥ ३ ॥

(अग्रतोवलोक्य) हन्त, प्रस्थितस्य मे प्रथममेव क्षपणकदर्शनं शंसति प्रकृतकार्यविघटनं। अपि नामेदं तथ्यं भवेच्छकुनशास्त्रम्। (उपसर्पति)

जीवसिद्धिः—कहिं पस्तिदे शेणाणाअए ? (छाया—कुत्र प्रस्थितस्सेनानायकः ?)

सेनापतिः—(सामर्षाभिनयं) समयमजानता तावदनुचितमाचरितं भवता, यतः कार्तान्तिकोपि प्रस्थानवेलायामेवं प्रश्नपरोसि।

जीवसिद्धिः—अळं, अमळिशेण, अह्मारिशेहिं एव्वं पुच्छिदश्श उद्दिश्टे कज्जे शुअळे एव्व हवे, होदु दाव, तं कज्जे कीळिशे, जं उद्दिशिअ पःश्चिदे। (छाया—अलममर्षेण, अस्मादृशैरेवं पृष्टस्योद्दिष्टं कार्यं सुकरमेव भवेत्, भवतु तावत्, तत्कार्यं कीदृशं, यदुद्दिश्य प्रस्थितः।)

सेनापतिः—(विहस्य) मृगयायां राजानुवर्तनम्।

जीवसिद्धिः—(साट्टहासं) एदे एव्व महंते कज्जे, ता पडिशिद्धे मिअआगमणे अमच्चळःखशेण, दाणिं, मए किदे अणुओए शफळे जादे। (छाया—एतदेव महत्कार्यं, तर्हि प्रतिषिद्धं मृगयागमनममात्यराक्षसेन, इदानीं मया कृतोनुयोगस्सफलो जातः।)

सेनापतिः—किमर्थम् ?

जीवसिद्धिः—चाणक्के किदप्पडिण्णे रण्णे चिट्ठइत्ति । (छाया–चाणक्यः कृतप्रतिज्ञोरण्ये तिष्ठतीति ।)

सेनापतिः—सत्यमेव शकुनशास्त्रं, सद्यः प्राणिमि, क्व प्रस्थितो भवान् ।

जीवसिद्धिः—हगे वि णंदशंमतिं, ळःखशश्श भणिदुं पःश्चिदे । (छाया–अहमपि नन्दसम्मतिं राक्षसाय भणितुं प्रस्थितः ।)

सेनापतिः—तर्हि प्रथमं तावत्तैर्नानुपालितं तद्वचनं, यतः पुनः प्रस्थितोसि ।

जीवसिद्धिः—तहा, तदो हगे प्पेशिदे ळःखशेण । (छाया–तथा, ततोहं प्रेषितो राक्षसेन ।)

सेनापतिः—यथा तथा वा भवतु, वयं पुनः कर्तव्यं राज्ञे निवेदयामः ।

जीवसिद्धिः—तह एव्व कळेदु शेणाणाअए, हगे उण ळःखशं पेक्खिश्शम् । (निष्क्रान्तः) । (छाया–तथैव करोतु सेनानायकः अहं पुनः राक्षसं द्रक्ष्यामि ) ।

सेनापतिः—(सहर्षं) अहं पुनरिदानीं मृगयां प्रति प्रभुं प्रोत्साहयामि । (निष्क्रान्तः)

( मिश्रविष्कम्भः )

( ततः प्रविशति सुगाङ्गप्रासादे सिंहासनोपविष्टोऽमात्यराक्षसद्वितीयस्सर्वार्थसिद्धिः )

सर्वार्थसिद्धिः—(सबाष्पं) आर्य–

मौर्यशतनिधनजातं दुःखं नाद्यापि शान्ततामेति ।
स्मरतो मुनिधिक्कारं निद्राप्यभवन्ममाहिता हन्त ॥ ४ ॥

नन्दानपिवा विलोकयन्तः कालमतिवाहयाम इति कृतमनस्कस्य मे सततमपि चित्तमशुभोदर्कमेव तर्कयति ।

राक्षसः—न तावद्भत्सेष्वशुभोदर्कभावनया मनः क्लेशयितुमर्हति महाराजः ।

सर्वार्थसिद्धिः—सचिवावतंस, न तथा, शृणोतु भवान्–

तपोधनानामार्याणां तिरस्कारस्सुदुस्तरः ।
कृतागस्कं दहेदन्तः कुकूलानलवज्जनम् ॥ ५ ॥

किञ्च, अन्यदपि वर्तते शोककारणम् ।

राक्षसः—किं तत् ?

सर्वार्थसिद्धिः—उषसि प्रतिबोधात्पूर्वं मयावलोकिता स्वप्ने वत्सानाममङ्गलपरम्परा ।

राक्षसः—(सावेगं) कीदृशी सा ?

सर्वार्थसिद्धिः—तैलाक्ततनवो वत्सा घोरबालेयवाहनाः ।
निहन्यमाना म्लेच्छौघैर्निर्जग्मुर्दक्षिणां दिशम् ॥ ६ ॥

राक्षसः—(सावेगं) हन्त, स्वप्नोयं वत्सानामशुभोदर्कशंसी, ततस्ततः ।

सर्वार्थसिद्धिः—ततो यावद्दीनवदना बाष्पपूर्णाक्षा मां पश्यन्ति, तावद्वन्दिभिः प्रतिबोधितोस्मि ।

राक्षसः—चिन्तास्थानमेतत्, चन्द्रगुप्तोऽपि पलायितः, प्रकोपितश्च चाणक्यः तदिदानीं तावदस्माभिर्निस्तन्द्रैर्भवितव्यम् ।

सर्वार्थसिद्धिः—तदद्य ममायमाशयः, तं तपोधनं पुनरपि कथमप्यानीय सान्त्वयाम इति, ते तु नन्दा मामवजानन्ति, शठो भवानिति ।

राक्षसः—युक्तमुक्तं महाराजेन ।

(नेपथ्ये कलकलः)

सर्वार्थसिद्धिः—किन्नु खल्विदं, सेनानिनाद इव । अस्मन्नियोगमप्युल्लंघ्य प्रस्थिताः किमु वत्सा मृगयायै ।

ससम्भ्रमं पटाक्षेपेण प्रविश्य भटः—देव, प्रमादः ।

राक्षसः—किं तत् ?

भटः—कतिपयबलपरिगता मृगयायै प्रस्थिता नन्दाः, चन्द्रगुप्तसहचरस्य पर्वतेश्वरस्य म्लेच्छबलैस्समाक्रान्ताः ।

सर्वार्थसिद्धिः—कथं, अस्मत्सुहृदः ।

राक्षसः—(सोद्धतमुत्थाय कोशात्खड्गमाकृष्य)

क्षीबम्लेच्छबलं विलूय कदलीलावं कृपाणाग्रतो
मत्तोत्तुङ्गमतङ्गजव्रजशिरःपीठान्यवस्फोट्य च ।
निर्वाप्यार्वसहस्रगर्वमचिरात्सर्वं यथौर्वोऽर्णवं
निर्वीर्यं करवाणि शत्रुबलमप्येकस्तथायोघने ॥ ७ ॥

सर्वार्थसिद्धिः—(सावेगं) राक्षस, अलं साहसेन, चतुरङ्गबलैर्यातु भवान्।

राक्षसः—(भटमवलोक्य) तर्हीदानीं—

निर्गच्छन्त्वद्रिकल्पा द्विरदघनघटाः कोटिशः पाटितोर्व्यो
नीरन्ध्रं सैन्धवा द्राक्खुरकुटिलपुष्टाघट्टनोद्धूलिताभ्राः।
शुभ्रांश्वच्छातपत्रस्थगितरथवरा धैर्यतो यान्तु वीराः
पत्तिव्रातास्स्फुरत्त्वक्षयमृदुकुहलीनद्धजङ्घा धृतास्त्राः ॥ ८ ॥

भटः—आर्य, महाराजाज्ञया तदैवानुयातं सर्वमपि बलम्।

राक्षसः—अहमपि प्रस्थितः, गच्छतु भवान्।

भटः—तथा, (निष्क्रान्तः)

राक्षसः—(सरभसं परिक्रामति)

जीवसिद्धिः—(प्रविश्य) अत्र स्याद्राक्षसः, तदुपसर्पामि, (उपसर्पति)

राक्षसः—कथं, क्षपणकः। (उपविशति)

जीवसिद्धिः—अय्य, तुह वअणं वि अदिक्कमिअ गदाओ णंदाओ, मिअअत्थं (छाया-आर्य, तव वचनमप्यतिलङ्घ्य गता नन्दा मृगयार्थं)

राक्षसः—प्रथनार्थमित्युच्यताम्।

जीवसिद्धिः—(ससाध्वसं) केण जुद्धे, (छाया—केन युद्धं)

राक्षसः—चन्द्रगुप्तोत्साहितेन पर्वतेश्वरेण।

जीवसिद्धिः—(स्वगतं) इदानीं चाणक्यनीतिलता पुष्पिता, (प्रकाशं) हंहो, पव्वदेशळे उण परक्कमेण पत्थं वि अदिक्कंतेत्ति शुणिदे मए, किं ईलिशे काळे वि एत्थ एव्व चिट्ठइ ळक्खशे (छाया—अहो, पर्वतेश्वरः पुनः पराक्रमेण पार्थमप्यतिक्रान्त इति श्रुतं मया, किमीदृशे कालेपि, अत्रैव तिष्ठति राक्षसः)

राक्षसः—अहमपि प्रस्थितः (उत्तिष्ठति)

भटः—(सरभसं पटाक्षेपेण प्रविश्य) (सबाष्पं) देव, निरालम्बमुद्विग्नं जगत्।

सर्वार्थसिद्धिः—(सोद्वेगं) किन्तत्?

राक्षसः—(सभ्रूभङ्गं) मूर्ख, सुस्पष्टं कथय।

भटः—(सकम्पं) द्विषा निषूदिता नन्दाः।

सर्वार्थसिद्धिराक्षसौ—हा नन्दाः (मूर्च्छितौ पततः)

जीवसिद्धिः—( सशोकाभिनयं ) शमश्शशिहि ( वर्हकलापेन वीजयति ) (छाया—समाश्वसिहि) ।

राक्षसः—(लब्धसंज्ञो मन्दमुपविश्य सगद्गदं)—

नभः पतति मस्तके दशदिशो विघूर्णन्ति च
क्षितिश्चलति निर्भरं तत इतोपि डोलोपमा ।
सुसंस्तुतमपीक्षणं मम जनं न गृह्णात्यमुं
श्रुतिर्व्रजति हा क्रमाद्बधिरतां क्व वा कोस्म्यहम् ॥ ९ ॥

सर्वार्थसिद्धिः—(लब्धसंज्ञश्शयान एव साक्षररिंखणं) हा वत्साः, मामप्यवेत भवदनुयायिनं (सशिरश्चालनं) हन्त, न....न, तथा न हा धिगसम्बद्ध-प्रलापिनं मां—

रणे निशारिता वीरा वारनारीभिरादरात् ।
वृता वरणमालाभिर्विराजन्ते त्रिविष्टपे ॥ १० ॥

पापीयान्खल्वहं,

राक्षसः—(ललाटे हस्तमाधाय)—

अनन्दा नाम ते लोका इति यच्छ्रुतितश्श्रुतम् ।
इहैव दृष्टः पापेन लोकस्तन्नामभाङ्मया ॥ ११ ॥

कष्टं भोः कष्टं, जगदिदमक्षत्रियं संवृत्तम् ।

सर्वार्थसिद्धिः—राक्षस, सत्यमभिहितं, क्षत्रियवंशकरीरोपि नावशिष्टः, हन्त जगति किं सुखमपत्यवताम्—

तनूजोत्पत्तेः प्राङ्न सुत इति चिन्तैव हृदयं
विशत्येका नान्या समधिगतपुत्रस्य तु सदा ।
विपद्भूयिष्ठेस्मिञ्जगति विविधा दुःखनिकराः
ध्रुवं तस्माद्धन्योऽनधिगततनूजो हि मनुजः ॥ १२ ॥

हन्त, न....न....तथा न, असम्बद्धं प्रलपितमल्पज्ञेन मया, सन्ति जगति सुकृतिनो बहवः पुत्रवन्तः—

लब्धापत्येषु मर्त्येषु कोपि पापी न मादृशः ।
दुःखैकभाजनं धिङ्मां यस्मात्सर्वे मृतास्सुताः ॥ १३ ॥

राक्षसः—कथं, नन्दा मृत्युवशं गताः, न कदाप्येवं भवेत्, अनृतमिदं, हे नन्दाः, कथं मृगयाविहारः, किमु न पश्यथ प्रेमदिग्धेन चक्षुषा, कथमायाता एवास्मज्जीवितनिर्विशेषा नन्दाः, (उत्थाय बाहुयुगलं प्रसार्य)—

आयातायतलोचना दृढतराश्लेषप्रदानेन मे
नन्दा नन्दयताङ्गमङ्कतलगाञ्जिघ्रामि वो मूर्धसु।
आदास्यं किमिदं किमेतदतुलं मौनं कुतो दीनता
प्रत्यर्थिद्विरदौघदर्पदमने यूयं हि कण्ठीरवाः ॥ १४ ॥

(कतिचित्पदानि गत्वा) हा, कथमन्तर्हिताः, युष्माकं मृत्युः खलु स चाणक्यः।

जीवसिद्धिः—शच्चं, तश्श चाणक्कहदअश्श णीदिविळशिदे एव्व हुवे, (छाया—सत्यं तस्य चाणक्यहतकस्य नीतिविलसितमेव भवेत्)

राक्षसः—(सदन्तपीडं) रे चाणक्यहतक! राक्षसमेनं मां राक्षसमवेहि-

मुष्ट्याकृष्टपिशङ्गकूर्चनिकरं त्वां पातयित्वा रणे
वामं पादतलं निधाय लुठतो वक्षस्थले ते हठात्।
कोशोत्खातकरालखड्गलतया वक्षो विदार्याचिरा-
न्नन्दांस्त्वद्रुधिरेण साधु गलता सन्तर्पयामि ध्रुवम् ॥ १५ ॥

(साटोपं खड्गमादाय जीवसिद्धिना निष्क्रान्तः)

सर्वार्थसिद्धिः—राक्षस, क्वासि? (परितो विलोक्य) कथं गत एव-

इतिकर्तव्यतामूढः क्रोधादेकस्समुद्धतः।
पतन्प्रत्यर्थिदावाग्नौ हा हन्त शलभायते ॥ १६ ॥

तदहमपि तदनुयायी भवेयम्। (उत्थाय परिक्रामति)

राक्षसः—(ससम्भ्रमं प्रविश्य) महाराज, क्व प्रस्थितोसि, नायमवसरः कालविलम्बस्य, तदद्य मद्वचनादनया सुरङ्गसरण्या प्रयातु भवानरण्यं।

सर्वार्थसिद्धिः—किमर्थम्?

राक्षसः—अस्मज्जिगृक्षया पुरप्राकारमभितः पर्यटन्ति परिपन्थिनः। तदधुना पत्रान्तर्हितशलाटुवदात्मा संरक्षणीयः।

सर्वार्थसिद्धिः—हन्त विधिविलसितं, राक्षस, वत्सेषु तादृशीं दशां प्रपन्नेषु किमनेन प्राणपरित्राणेन, तदहमपि नन्दानुवर्ती भवेयं, (परिक्रामति)

राक्षसः—(निवार्य) महाराज, अलं साहसेन। (सबाष्पं)—

मृतेषु वत्सेष्वपि मूलभूतं भवन्तमेकं कठिनोऽवलम्ब्य।
जीवामि तावत्परिपन्थिमृत्युस्त्वां स्थापयामीह पुनश्च यावत्॥

सर्वार्थसिद्धिः—किमभिहितं भवता, "त्वां स्थापयामीह पुनश्च यावत्" इति, किमपेक्ष्यमीदृशस्य मे पुनरपि राज्यं, तदिदानीं निर्धारितं मया द्वयोरन्यतरं—

अहं करोमि तं शत्रुं नामशेषं प्रतापतः।
उच्चैर्बलावलिप्तो मामथवारिस्तथा मृधे ॥ १८ ॥

इति। (कतिचित्पदानि गच्छति)

राक्षसः—(अर्गलीभूय) महाराज, त्यज्यतां साहसमिदं, नाहमुत्सहे भुवनमक्षत्रियं कर्तुं, सर्वार्थसिद्धे, श्रूयतां तथ्यमिदं, मे वचः। भवतोपि बलवती मे जीवितजिहासा, तथापि कथञ्चिद्वंशवात्सल्यात्प्राणिमि।

परलोकं गते त्वय्यप्यहं कमवलम्ब्य वा।
इहोद्योगी भवेयं हा विना भित्तिं न लेखनम् ॥ १९ ॥

तन्मा कुरु जललिपिकल्पमस्मदुद्योगम्।

सर्वार्थसिद्धिः—तर्हि भवान्।

राक्षसः—अहमप्यनयैव सुरङ्गसरण्या भवन्तमनुव्रजामि, गच्छतु तावत्प्रथमं भवान्।

सर्वार्थसिद्धिः—हा नियते, कियन्तं कालमेवं धृतप्राणेन मया भवितव्यं, न जाने, (इति प्रासादाद्राक्षसेनावरुह्य) राक्षस, भवद्वचनात्प्रस्थितोसि, भवतापि क्षिप्रमेवानुयातव्यम्। (इति सुरङ्गमार्गेण निष्क्रान्तः)

राक्षसः—(परितो विलोक्य दीर्घं निश्वस्य) क्व वा निक्षिपामि सपुत्रं कलत्रं, तस्य मदनुगमनमनुचितं हि (गगने लक्ष्यं बध्वा) हा नियते, कीदृशमुपनतं कष्टं, (विचिन्त्य) भवतु, अस्मज्जीवितनिर्विशेषस्य सुहृच्चन्दनदासस्य सविधे निक्षिप्य यास्यामि। स्यान्नामैतत्—

परगृहवासोदन्तं पत्न्यै प्रथमं कथञ्चु कथयेयम्।
प्रेयस्या श्रुतवत्या कीदृश्यनुभूयते दशा हन्त ॥ २० ॥

गृहमेव गत्वा प्रकृतोचितमाचरामि (परिक्रम्य निजसौधमवलोक्य) अहो नन्दसम्पत्परीवाहावतरणपथोयमस्मत्सौधोधुना दौर्गत्याकरस्सं-वृत्तः—

मदमुदितगजौघस्फीतघण्टारवा ये
श्रवणपुटमभीक्ष्णं प्रीणयन्ति स्म तेद्य।
अजिरतटगतस्य क्रूररूपा ममैते
द्विगुणितकटुतापा हन्त हन्ताविशन्ति ॥ २१ ॥

(इत्यजिरान्तरं प्रविश्य गृहाभ्यन्तरं विलोक्य)—

पूर्णत्वाद्वितताक्षिपक्ष्मतटतो बाष्पैः पतद्भिर्मुहु-
स्सिक्तं कोमलपाणिपङ्कजतले विन्यस्य गण्डं प्रिया।
चिन्तानामितमस्तका भुजतलालम्बिप्रवेणीलता
न्यस्तं पुस्तकमङ्कसीम्न्युपविशत्यपेक्षमाणा क्षितौ ॥ २२ ॥

(परिक्रामति)

( ततः प्रविशति यथानिर्दिष्टा मालती )

राक्षसः—(उपसृत्य) ननु किमेतत् ?

मालती—( सत्वरं पुस्तकं पिधाय सस्मितमुत्थाय सविनयं ) क्षन्तव्यमागः यत्पुस्तकावलोकनैकतानया न मया तावदार्यपुत्रः प्रत्युद्गमनादिना सत्कृतः। (इत्यासनं ददाति)

राक्षसः—(सस्मितं) सत्कृतोस्म्यनयैव वाचा, (उपविश्य) किं वस्तु पुस्तके ?

मालती—(सविनयविभ्रममुपसृत्य) हरिश्चन्द्रचरितम्।

राक्षसः—साधु सुशीले साधु, क्षिपसि कालं सत्कथावलोकनेन।

मालती—आर्यपुत्र, अद्भुतचरितो हि सत्यव्रतो हरिश्चन्द्रः, एतदवलोकना-त्प्रभृति शोकेन दम्यमानकण्ठास्मि।

राक्षसः—शोकनिमित्तं किं ?

मालती—हन्त, शोकनिमित्तं किमिति, तस्य धर्मस्वरूपस्य राज्ञो राज्य-च्युतिः, चण्डालताप्राप्तिः, सपुत्रायास्तत्सहधर्मिण्याः परगृहवासः, तत्रापि क्लेशपरम्परा, को वा न शोचति दुःखपरम्परामिमामाकर्ण्य।

राक्षसः—(स्वगतं) सुसमयोयमस्मत्कार्यप्रस्तावनायाः, (प्रकाशं) अपि गृहीतो वस्तुसारः।

मालती—अथ किम्?

राक्षसः—तर्हि कथ्यताम्।

मालती—पत्युर्दुर्दशायां तज्जायया, कथञ्चिद्धृतप्राणया समभिरक्षितपातिव्रत्यया तत्समभागक्लेशया भवितव्यमिति।

राक्षसः—यद्यस्माकमुपनता भवेत्तादृशी दशा, तदा भवत्यापि तथानुष्ठेयं ननु?

मालती—मया पुनरनुष्ठीयते, तर्हि कदापि मा भूत्तादृशी दशा।

राक्षसः—इदानीमेवोपनता।

मालती—(सावेगं) कथं? क्षिप्रं कथयत्वार्यपुत्रः, किं तत्?

राक्षसः—(सगद्गदं) प्रिये, कथं कथयेयं—

नन्दा हताश्शत्रुबलेन सोपि सर्वार्थसिद्धिर्विपिनं प्रयातः।
अहञ्च यास्यामि सपुत्रकां त्वां त्यक्त्वा सुहृच्चन्दनदासगेहे ॥२३॥

मालती—कथं? नन्दा हताः धिक्कृतधिषणधिषणे सत्यप्यार्यपुत्रे। हन्त, प्राक्प्रार्थितो वनवासस्तावदेवमुपनतस्सर्वार्थसिद्धेः।

राक्षसः—किं वा कर्तुं शक्यं सचिवेन? एवं स्थिते दैवदुर्विलसिते—

यावान्मनीषाविभवोस्ति पुंसस्तावान्प्रयुज्येत ननु क्रियासु।
प्रवर्तितुं दैवबलं विलङ्घ्य कथं भवेत्तद्वशगं जगद्धि? ॥ २४ ॥

कः कोत्र भोः?

द्वारपालः—(प्रविश्य) आणवेदु अज्जो। (छाया—आज्ञापयत्वार्यः)

राक्षसः—अधुनैव द्रष्टुमिच्छामि चन्दनदासम्।

द्वारपालः—गदो हं आणेदुं। (निष्क्रान्तः) (छाया—गतोहमानेतुम्)

मालती—(सबाष्पं) आर्यपुत्र, कथं भवद्भिरहिता परगृहनिवासिनी भवेयम्?

राक्षसः—प्रिये, मैवं, चन्दनदासमात्मनिर्विशेषमवेहि, स तु सज्ज एव सुहृद्विपदि जीवितमपि दातुम्।

बालः—(सवल्गितमभ्यन्तरात्प्रविश्य) ताद, (इति सस्मितं राक्षसस्याङ्कतल्पमधिरोहति)

राक्षसः—(सबाष्पं पुत्रं शिरस्याघ्राय परामृशन्सगद्गदं) वत्स—

कदा वा द्रक्ष्यामि द्विषदभिभवध्वस्तविभवो-
भ्रमन्नुन्मत्तोहं विपिनमभितो नाथरहितः।
मुखाब्जं ते तातेत्यपि मृदुतरां हन्त फणितिं
कदा वा श्रोष्यामि श्रवणमधुरां पुत्रक पुनः ॥ २५ ॥

बालः—(जननीमवलोक्य) अम्ब, कुदो रोइइ अह्माणं तादो। (छाया—अम्ब, कुतो रोदिति, अस्माकं तातः)

मालती—(पुत्रस्य चिबुकमन्नमय्य शिरः परामृशन्ती सबाष्पं) वत्स, राजकार्यकृते भवन्तं माञ्च विहाय परगृहे क्वाप्यद्य यास्यति।

बालः—ळाअकज्जाणंदरं पुणो वि किं आअमिस्सदि तादो। (छाया—राजकार्यानंतरं पुनरपि किमागमिष्यति तातः)

मालती—अथ किं?

बालः—अम्ब, तादो मं वि आणीअ गच्छदु। (छाया—अम्ब, तातो मामप्यानीय गच्छतु)

मालती—तात, तातपादैस्सह गत्वा किं करिष्यसि?

बालः—हं वि ळाअकज्जं करिस्सं। (छाया—अहमपि राजकार्यं करिष्यामि)

मालती—(सबाष्पस्मितं) नूनं, आर्यपुत्रस्य पुत्रो हि भवान्। (इति चुम्बति)

राक्षसः—(सगद्गदस्मितं) साधु वत्स साधु, राक्षसपुत्रोसि—

अमात्यवंशजातस्य लब्धनीतेश्चिरायुषः।
राजभक्तिस्स्थिरा भूयादेवमेव तवार्भक ॥ २६ ॥

मालती—आर्यपुत्र, कथमीदृशं विहाय पुत्रं यियाससि, तदहमपि साकमनेन भवन्तमनुगन्तास्मि।

राक्षसः—प्रिये, मदनुगमनमनुचितमधुना।

मालती—किमर्थम्?

राक्षसः—किमपि तन्त्रमवलम्ब्य भवतीमत्रैव पुरे विहाय यास्यामि।

मालती—तन्नयदि रहस्यं, कथयत्वार्यपुत्रः?

राक्षसः—मन्यन्ते प्रजाः, राक्षसस्सपुत्रं कलत्रं तावदिहैव विहाय गतः, तत्पुनरप्यागत्य वशीकरिष्यति स्वराज्यं, इति।

मालती—जानन्तु नाम, तेन किमार्यपुत्रस्य ?

राक्षसः—अस्मदवलम्बनेन चन्द्रगुप्ते शिथिलानुरागा भवन्ति प्रजाः।

मालती—युक्तमभिहितमार्यपुत्रेण, स्यादेतत्, अहं पुनरेकाकिनी कथं वसामि परगृहे ? (वाष्पमुत्सृजति)

राक्षसः—(दीर्घं निश्वस्य) एवं स्थिते दैवदुर्विलसिते, किं मया कर्तुं शक्यं, ननु प्रिये, तदधुना निसर्गतो विवेकिन्यै ते न किमपि वक्तव्यमस्ति, तथापि अशक्यानुवर्तनं स्त्रीहृदयमिति, किञ्चिद्विवक्षुरस्मि।

मालती—आदिशत्वार्यपुत्रः

राक्षसः—कदाचिदपि चन्दनदासकुटुम्बिन्या कोपाद्वा, विभवदर्पाद्वा यद्यभिभूता भवती, तदा मा प्रकाशयतु मुखे वैवर्ण्यमपि, किञ्च—

तत्पुत्रेषु स्मितयुतमुखी सादरं भाषमाणा
तस्याः कोपे नमितवदना मौनमङ्गीकुरुष्व।
स्वातन्त्र्यं मा प्रकटय कृतस्नेहदृष्ट्यापि कान्ते
गुप्तक्लेशा निवस सुहितेवात्मजं वीक्षमाणा ॥ ३७ ॥

मालती—( राक्षसहस्तमवलम्ब्य मुद्रामवलोक्य ) आर्यपुत्र, भवन्नामाङ्कितामिमां मुद्रामपि वा विलोकयन्ती कथञ्चित्कालमतिवाहयामि, तद्दीयताम्।

राक्षसः—(अङ्गुल्या मुद्रामवमुच्य) प्रिये—

हस्ताङ्गुलौ मदभिधानजुषं दधाना
मुद्रां सखीमिव मृगाक्षि विभावयैनाम्।
यस्मान्निवारयति दुःखमवेक्ष्यमाणा
संस्मारयत्यभिहितं मम नीतिवाक्यम् ॥ ३८ ॥

(इत्यर्पयति)

चन्दनदासः—(प्रविश्य) (दूरादमात्यमवलोक्य) रक्खसो एसो सहधम्मिणीए किं वि चिंतअंतो विअ दीसदि, तं दाणिं णम्मवअणेण हासइस्सं, (उपसृत्य) प्पाअसो, णिवडइ अमच्चाणं दिट्ठि, अह्मारिसेसु धणिसु, (सस्मितमासने समुपविश्य) अवि कुसळं। (छाया—राक्षस एष सहधर्मिण्या किमपि चिन्तयन्निव दृश्यते, तदिदानीं नर्मवचनेन हासयिष्यामि, प्रायशो निपतति, अमात्यानां दृष्टिः, अस्मादृशेषु धनिषु अपि कुशलं) (मालती—सलज्जं किञ्चिदपसरति)

राक्षसः—सुहृद्वर्य, अलं नर्मणा, परलोकं गतेषु नन्देषु कुतो मे कुशलम् ?

चन्दनदासः—(सावेगं) कहं, णंदाओ, महंतं एदं अच्चरिअं, मए सुणिदं तेदु मिअआए प्पत्थिदाओ त्ति। (छाया—कथं, नन्दाः, महदिदमाश्चर्यं मया श्रुतं ते तु मृगयायै प्रस्थिता इति?)

राक्षसः—तत्तु सत्यं, छिद्रान्वेषिणा चाणक्यहतकप्रोत्साहितेन पर्वतेश्वरेण तदैव ते निषूदिताः।

चन्दनदासः—कहं तुह मित्तेण पव्वदेसेण। (छाया—कथं तव मित्रेण पर्वतेशेन?)

राक्षसः—चन्दनदास, मा तावत्पुनरेवं कथय कृतघ्नं मित्रमिति।

चन्दनदासः—किं णिमित्तं हं आहूदो, दासेण दाणिं मए किं अणुचिट्ठिदव्वं। (छाया—किं निमित्तमहमाहूतः, दासेनेदानीं मया किमनुष्ठातव्यं)

राक्षसः—आपद्बन्धो, मया तावत्प्रतिज्ञातं, यावत्तं वृषलं पापिना चाणक्येन समं नामशेषं न करिष्यामि, न तावदहं कुसुमपुरं प्रवेक्ष्यामीति, तदिदानीं सपुत्रं कलत्रं निक्षिप्य भवन्मन्दिरे जिगमिषुरस्म्यरण्यम्।

चन्दनदासः—(साञ्जलिबन्धं) धण्णोह्मि, जदो वट्टमाणेसु वि विस्संभभाअणेसु बहुसु परिअणेसु, एआरिसाए दसाए दासजणो एसो जादो अमच्चस्स हिअअगोअरो। (इति बाष्पमुत्सृजति) (छाया—धन्योस्मि, यतो वर्तमानेषु बहुषु परिजनेषु एतादृश्यां दशायां दासजन एष जातोऽमात्यस्य हृदयगोचरः)

राक्षसः—(सगद्गदबाष्पं) चन्दनदास, इदमेकमभिधीयते—

पतिविरहतापितेयं तथावलोक्या तपस्विनी कान्ता।
अस्पृष्टा वसति यथा द्युमणिकरेणापि तावके गेहे ॥ २९ ॥

चन्दनदासः—अथकिं—

जीविदं वि परिच्चत्तुं एत्थ सज्जो ह्मि रक्खस।
ण उणो दे कळत्तस्स णिवेदेमि ट्ठितिं घरे ॥ ३० ॥

(छाया—जीवितमपि परित्यक्तुमत्र सज्जोस्मि राक्षस।
न पुनस्ते कलत्रस्य निवेदयामि स्थितिं गृहे ॥)

राक्षसः—कालविलम्बस्य नायं समयः, क्वाप्यन्तर्हितगात्रस्तत्रेण यतिष्ये शत्रून्मूलनाय।

चन्दनदासः—तह कादव्वं अमच्चेण। (छाया—तथा कर्तव्यममात्येन)

राक्षसः—सुहृद्वर्य, प्रस्थितोस्मि, (उत्थाय चन्दनदासमालिंग्य) विजयी पुनरपि भवन्तं द्रक्ष्यामि, (बालमुपसृत्य सबाष्पं) वत्स, इतःपरं तदनुवर्ती भव, (आलिंग्य शिरस्याघ्राय) वत्स, प्रस्थितोस्मि। (परिक्रामति)

चन्दनदासः—आअच्छदु अज्जा, (परिक्रम्य) अमच्च, कइआ पुणो वि तुह मुहं पेक्खिस्सं। (निष्क्रान्तः) (छाया—आगच्छत्वार्या, अमात्य, कदा पुनरपि तव मुखं द्रक्ष्यामि)

मालती—(सबाष्पं राक्षसमेव पश्यन्ती सुतमादाय निष्क्रान्ता)

राक्षसः—(दीर्घं निश्वस्य) कः कोत्र भोः ?

द्वारपालः—(प्रविश्य) आणवेदु अज्जो। (छाया—आज्ञापयत्वार्यः)

राक्षसः—इदानीमेव जीवसिद्धिं द्रष्टुमिच्छामि।

द्वारपालः—गदो हं आणेदुं। (छाया—गतोहमानेतुं) (निष्क्रान्तः)

जीवसिद्धिः—(प्रविश्य) धम्मशिद्धी होदु अळिहंताणं। (छाया—धर्मसिद्धिर्भवत्वर्हतां)

राक्षसः—भदन्त, भवन्तं कस्मिंश्चिद्रहस्ये कर्मणि नियोक्तुमिच्छामि।

जीवसिद्धिः—आणवेदु अमच्चे। (छाया—आज्ञापयत्वमात्यः)

राक्षसः—(कर्णे) एवमिव।

जीवसिद्धिः—तह होदु। (निष्क्रान्तः) (छाया—तथा भवतु)

राक्षसः—(परिक्रम्य नन्दभवनं प्रविश्य सुरङ्गद्वारमासाद्य) कष्टं, भोः कष्टं—

नन्दा हताः प्रभुरसौ विपिनं प्रयातो
राज्यन्त्वभूद्रिपुवशं मम नीतिपुष्टम्।
त्रातुं सपुत्रमपट्टुर्नितरां कलत्र-
मुन्मत्तवद्वनमये बत राक्षसोहम् ॥ ३१ ॥

( इति सुरङ्गद्वारेण निष्क्रान्तः )

षष्ठोऽङ्कः।

## सप्तमोऽङ्कः

(ततः प्रविशति पत्रहस्तस्सिद्धार्थकः)

सिद्धार्थकः—आणत्तो आचालिअक्खवणएण, जह, तह एव्व उवाएहिं चिळादो भाउळाअणं हिअअणिव्विसेसं कदुअ वसे ठाविदवंतो ह्मि। दाणिं अज्जचाणक्केण दिण्णं एदं पत्तं भाउळाअणस्स देदुं तस्स सआसं गमिस्सं (परिक्रामति) (छाया—आज्ञप्त आचार्यक्षपणकेन यथा, तथैवोपायैश्चिराद्भागुरायणं हृदयनिर्विशेषं कृत्वा वशे स्थापितवानस्मि। इदानीमार्यचाणक्येन दत्तं पत्रं भागुरायणाय दातुं तस्य सकाशं गमिष्यामि)

(ततः प्रविशति निजवेश्मन्यासने निषण्णो भागुरायणः)

भागुरायणः—अहो चाणक्यनीतिर्महोपकारिणी, तथाहि—

बुद्धिं विकासयति भीतिमपाकरोति
धैर्यं विवर्धयति पाटवमातनोति।
दूरीकरोति रुषमुत्थितकार्यहन्त्रीं
पुष्णाति शाठ्यमतुलां श्रियमुच्चिनोति ॥ १ ॥

(सवैलक्ष्यं) क्व पर्वतेश्वरः ? क्व वा सभिक्षुश्चाणक्यः—

अमात्यराक्षसस्यापि मित्रं तं पर्वतेश्वरम्।
युक्त्योपजापमुत्पाद्य चाणक्यश्शत्रुमातनोत् ॥ २ ॥

स्यादेतत्, किं कथयेयं नन्दानामापतितमकालमृत्युं—

पत्तिहस्तिरथिवाजिभीकरं
सैन्यमम्बुधिमिवातिदृक्पथम्।
लीलयैव करवालपाणयो
ये नवावधिषुराशु ते हताः ॥ ३ ॥

अथवा युक्तमेवैतत्, तथाहि—

मौर्यं सद्गुणसागरं कपटतो व्यापाद्य भूम्यन्तरे
पुत्रैस्साकमनल्पकिल्बिषविषज्वालावलीढाश्शठाः।
नन्दास्ते चणकात्मजेन विधिना प्रज्ञावता घातिताः
धर्मात्माप्यभिषेक्ष्यते स वृषलः कर्मानुरूपं फलम् ॥४॥

असत्सुहृदा सिद्धार्थकेनाभिहितां चाणक्यनीतिमधुना साक्षादनुभवामि। हन्त, प्रतिभाशालिनश्चाणक्यस्य वशवर्तिता तावत्सर्वथा भयोत्पादिनी—

कदा कस्मिन्कार्ये नियमयति भृत्यं प्रभुरिति
स्ववृत्तिं चोत्सृज्य प्रभुकृतनियोगेऽपि रचिते।
भवेद्वा वैगुण्यं बहुनययुते तत्र किमिति
प्रकृत्या धीमानप्यविरतमहं भीतहृदयः ॥ ५ ॥

सिद्धार्थकः—(उपसृत्य) किं एदं, किं वि चिन्तअन्तो विअ दीसइ,
(छाया—किमेतत् ? किमपि चिन्तयन्निव दृश्यते)

भागुरायणः—सखे, किमन्यत्, नन्दानां दशैवानुचिन्तिता, इदमासनम्।

(सिद्धार्थकः—उपविशति)

भागुरायणः—सखे, किमागमनप्रयोजनम् ?

सिद्धार्थकः—एदं पत्तं, तुह समप्पणिज्जं त्ति, अज्जचाणक्केण दिण्णं, (इत्यर्पयति) (छाया—एतत्पत्रं, तव समर्पणीयमित्यार्यचाणक्येन दत्तं)

भागुरायणः—(पत्रमुद्घाट्य वाचयति)

सिद्धार्थकमुखादवगतभवत्प्रणयेन मया तावदिदमभिधीयते, निसर्गतः प्रतिभावते सागरायेव निखिलवाहिनीनायकाय गम्भीरप्रकृतये सत्वसम्पन्नायामोघसद्गुणमणिगणाय कालक्रममनुसरते भवते किं वक्तव्यं। अस्यां निशि चन्द्रगुप्ताय राक्षसप्रेषिता विषकन्यका तावदस्मद्राज्यार्धापहर्त्रे पर्वतेश्वराय जीवसिद्धिना सह प्रेषयिष्यते। तत्समयज्ञेन भवता पर्वतेशनाशनिशमनसमनन्तरमेव तत्पुत्रो मलयकेतुरश्राविवतपितृनिधनवार्तो निजपुरीं नेयः, भद्रभट डिङ्गिरातप्रभृतयस्सेनानायकाः किमप्यपरागबीजं चन्द्रगुप्ते प्रकटय्य मलयकेतुमेवाश्रयिष्यन्ति। नगरादपक्रान्तस्य सर्वार्थसिद्धेर्वधाय प्रेषिताः कतिपये घातुकाः। कदाप्याश्रयेन्मलयकेतुमेव निरवलम्बनो राक्षसः। तत्र च मैत्रीं सम्पाद्य लब्धाधिकारेण भवता कालक्रमात्परिकल्प्य तयोरुपजापं युक्त्या राक्षसो विघटनीयः। किञ्च, इदं तावदनवरतमपि स्मर्तव्यं, "कथञ्चिद्राक्षसो रक्षणीयः" इति। तदा तदा करिष्यमाणस्तन्त्रकलापः परं प्रणिधिमुखान्निवेद-

यिष्यते। भन्द्रमस्तु ते (क्षणमिव विचिन्त्य) सिद्धार्थक, मद्वचनादार्यचाणक्याय निवेदय, यथानियोगमनुष्ठीयते दासेनेति।

सिद्धार्थकः—तहा। (निष्क्रान्तः) (छाया-तथा)

भागुरायणः—(वहिरवलोक्य) अहो, अवसितप्राया सन्ध्या—

चाणक्यनीतिरिव रात्रिरियं तमोभि-
राच्छाद्य लोकहृदयं स्ववशे निधाय।
स्वच्छन्दचारमवरुध्य नृणां समन्ता-
त्सञ्चारयत्यतिपटून्रजनीचरान्यत् ॥ ६ ॥

तदहमपि गच्छामि प्रकृतकार्यकरणाय। (उत्थाय निष्क्रान्तः)

( मिश्रविष्कम्भः )

( ततः प्रविशति मलयकेतुना सह निजपटगृहोपविष्टः पर्वतेश्वरः )

पर्वतेश्वरः—वत्स—

दिष्ट्या निहता नन्दाः प्रबला अपि नीतियत्नतोस्माभिः।
चणकसुतेनाप्युक्तं श्वो दास्याम्यहमिहार्धराज्यमिति ॥ ७ ॥

मलयकेतुः—तातपादैस्तु युक्तमभिहितं, न तावदहं प्रत्येमि कौटिल्यवचनं, न यावद्विभज्य प्रदास्यति राज्यमर्धम्।

पर्वतेश्वरः—वत्स, न तथा, किमुपकारिष्वपि प्रयोक्ष्यति कौटिल्यः कुटिलां नीतिम्।

मलयकेतुः—स तु चन्द्रगुप्तार्थं कुर्यादपि तथा।

पर्वतेश्वरः—श्वः पश्यामस्तावत्, निद्रासमयोप्युपनतः, पश्य—

स्फीता पाण्डरदन्तशायितवृहच्छुण्डाश्शयाना गजाः
स्तोकं त्वेकमुदस्य पादमचलप्रोथास्तुरङ्गास्स्थिताः।
सन्तुष्टा रथिनो मिथो मृधकथाश्शंसंत एवात्मनः
सर्वेपि स्वपदे स्वपन्ति रणजश्रान्त्यात्तनिद्राभराः ॥ ८ ॥

भवानपि समीककर्मणा परिश्रान्तः, तद्यातु निजकटकमेव संवेशाय।

मलयकेतुः—तथा। (पितरं प्रणम्य निष्क्रान्तः)

( ततः प्रविशति धृतोपभोगसम्भारसम्भृतकनकभाजनया विषकन्ययाऽनु-
गम्यमानो जीवसिद्धिः )

**जीवसिद्धिः**—इदो एहि वच्छे। (छाया—इत एहि वत्से)

**कन्यका**—वद्धमुह, केत्तिअं दूळं एव्वं जादव्वं अंधआळपिणद्धणअणपहाए मए। (छाया—भद्रमुख, कियद्दूरमेवं यातव्यमन्धकारपिनद्धनयनपथया मया)

**जीवसिद्धिः**—मिअःकि, पक्खु आळादो एव्व महाळाअश्श कडए शण्णिहिदे। (इति परिक्रम्य स्वगतं) अद्य चाणक्यस्य नियोगमनुतिष्ठामि। (छाया—मृगाक्षि, पश्चारादेव महाराजस्य कटकस्सन्निहितः)

**पर्वतेश्वरः**—(दूरान्निर्वर्ण्य) कास्विदियं, परित्यक्तैहिकव्यासङ्गं क्षपणकमेन-मनुयाति, अहो सौन्दर्यातिशयो मृगाक्ष्याः—

कान्त्या ध्वान्तं समायाति नुदन्ती चञ्चलेक्षणा।
वलाहकसमूहान्तर्लसत्सौदामनीनिभा ॥ ९ ॥

**जीवसिद्धिः**—धम्मशिद्धी होदु अळिहंताणम्। (छाया—धर्मसिद्धिर्भवत्वर्हतां)

(कन्यका—अवनतमुखी जीवसिद्धेः पृष्ठतस्तिष्ठति)

**पर्वतेश्वरः**—भदन्त—

सुन्दोपसुन्दहननाय तिलोत्तमा सा
लोकोत्तराद्भुतसुरूपमनोहराङ्गी।
सृष्टा किलेयमधुना विधिना वधाय
कस्यात्र नाकललनास्पृहणीयरूपा ॥ १० ॥

**जीवसिद्धिः**—(स्वगतं) तवैव।

(कन्यका—मुखं नमयति)

**पर्वतेश्वरः**—भदन्त-किन्नु खल्विदं, जोषं स्थीयते, रत्नगर्भारत्नमियं कथमासादिता।

**जीवसिद्धिः**—देव्व, णिवेदेमि, पःश्ताणकाळम्मि ळक्खशेण एदं इद्धि-आळदणं मह हत्थे णिःक्रिविअ एव्वं भणिदे, (संस्कृतमाश्रित्य) अये-भदन्त, कन्येयं वल्लभराजस्य पुत्री, पुरा सङ्ग्रामावसरे पराजितेन तेन नन्दार्थमुपग्राह्यतया समर्पिता, निजापत्यनिर्विशेषं पोषिता च। हन्त नन्देषु तादृशीं दशां प्रपन्नेषु किमनया, तत्पूर्वं सुहृद्भावमधि-गताय पर्वतेश्वराय समर्पय, इति। (छाया—देव, निवेदयामि प्रस्थानकाले राक्षसेनैतत्स्त्रीरत्नं मम हस्ते निक्षिप्यैवं भणितं)

पर्वतेश्वरः—(स्वगतं) अहो, नन्दानां रत्नहारित्वं, धीमान्राक्षसो मां दानेन वशीकर्तुमिव ।

जीवसिद्धिः—किं देव्वे विमश्शेदि, एणं अंगीकदुअ लःक्खशश्श अब्भत्थणं शफळेदु । (छाया—किं देवो विमृशति ? एनामङ्गीकृत्य राक्षसस्याभ्यर्थनां सफलयतु)

पर्वतेश्वरः—न किमप्यन्यच्चिन्तितं, अस्या रूपोत्कर्षं भावयन्नासं, भदन्त, शृणु तावत्—

यो वर्णितः कविभिरद्भुतरूपकान्ति-
लावण्यराशिरबलासु मया श्रुतस्सः ।
चित्रेपि लेखनचणेन निवेशितो यो
दृष्टस्स न श्रुतविलोकितपूर्व एषः ॥ ११ ॥

तन्निवेदयामात्यराक्षसाय, भवत्प्रणयपात्रमासीदयं जन इति ।

जीवसिद्धिः—तहा । (छाया—तथा) (परिक्रम्य) एतद्वृक्षान्तर्हितशरीरो-द्रक्ष्यामि इयं सादरं तस्य वशा भवेन्नवेति । (तथा करोति)

पर्वतेश्वरः—मत्तकाशिनि, किन्नु खल्विदं, दूरे तिष्ठसि—

गाढालिङ्गनभुग्नचूचुककनद्वक्षोजकुम्भाधुना-
मत्कण्ठार्पितदीर्घबाहुलतिका प्रोद्भिन्नरोमाञ्चिता ।
कान्ते स्वर्गसुखं तवाधरसुधादानेन दीनाय मे
कन्दर्पोरुशराजुविद्धहृदयायापादय प्रेयसि ॥ १२ ॥

कन्यका—णंदस्स पाणिं गेह्निअ अप्पा सफळीकादव्वत्ति मए रक्खिदाओ प्पाणाओ, तस्सिं तारिसं दसं उवगदे तंवंसमसुप्पणं चंदउत्तं वा ओळंबेमि, ण उण अण्णं, अमच्चरक्खसेण वि एव्वं भणिदं, को तुमम् । (छाया—नन्दस्य पाणिं गृहीत्वात्मा सफलीकर्तव्या इति मया रक्षिताः प्राणाः तस्मिंस्तादृशीं दशां उपगते तद्वंशसमुत्पन्नं चन्द्रगुप्तं वाऽवलम्बे । न पुनरन्यं, अमात्यराक्षसेनाप्येवं भणितं, कस्त्वं)

पर्वतेश्वरः—कान्ते, अनेकसामन्तावनीपतिचक्रमकुटकोटिप्रत्तरत्नरोचिर्वितानीराजितचरणारविन्दो नवनन्ददन्तिवृन्ददर्पदमनदक्षहर्यक्षो गुप्ताय चन्द्रगुप्तायापि कुसुमपुरविभवप्रदाता पर्वतनेतासि, तदलं चिन्तया ।

कन्यका—किं तुमं पव्वदेसरो, (परितो विलोक्य) किं एदं, मं एत्थ उज्झिअ गदो सो खवणओ। (छाया—किं त्वं पर्वतेश्वरः, किमेतत्, मामत्रोज्झित्वा गतस्स क्षपणकः)

पर्वतेश्वरः—(सानुनयं) प्रिये, गच्छतु नाम स भिक्षुः—

स्मरतीक्ष्णशरानुविद्धमेत-
द्व्रणजातश्रमपीडितं मदङ्गम्।
परिरभ्य शिरीषकोमलाङ्गै-
र्ननु निर्वापय तापमद्य कान्ते ॥ १३ ॥

तदेहि शयनागारं। (तया निष्क्रान्तः)

जीवसिद्धिः—दिष्ट्या फलिता नीतिः, उदन्तमेनमार्यचाणक्याय यावन्निवेदयामि। (परिक्रामति)

(ततः प्रविशति निजपटगृहे तल्पोपविष्टश्चाणक्यः)

चाणक्यः—साधु राक्षस, साधु, विस्मयजननी ते स्वामिभक्तिः—

प्रायोस्ति यावद्विभवो नृपेषु
तावज्जनास्तान्परितश्श्रयन्ते।
मृतेषु नन्देष्वपि नष्टराज्ये-
ष्वहो न तद्भक्तिरभूत्कृशा ते ॥ १४ ॥

अत एव भवत्सङ्ग्रहणे तावदियान्प्रयत्नः (सश्लाघं) अहो ते प्रज्ञातिशयः

रात्रंदिवमपि युष्मत्प्रज्ञामतिलङ्घितुं नयस्निग्धाम्।
चाणक्यस्य ममापि प्रज्ञा क्लेशं विगाहते यस्मात् ॥ १५ ॥

(विचिन्त्य) राक्षसान्वेषणाय प्रेषितः प्रणिधिः। भद्रभटडिङ्गिरातप्रभृतयस्सेनानायकाः कथञ्चिद्दोषोद्भावनेन नगरान्निष्कासनीयाः, जीवसिद्धिना तावदियता कालेन निर्वर्तिता भवेदस्मदाज्ञा।

जीवसिद्धिः—(उपसृत्य) णिव्वट्टिदे अज्जस्स णिओए (छाया—निर्वर्तित आर्यस्य नियोगः)

चाणक्यः—साधु जीवसिद्धे, साधु, एवमेव मया नियुक्ते कर्मणि व्यग्रो भव।

जीवसिद्धिः—तहा। (निष्क्रान्तः) (छाया—तथा)

(ततः प्रविशति चन्द्रगुप्तः)

चन्द्रगुप्तः—(सनिर्वेदं) आर्यानुग्रहेण लब्धं राज्यं, हन्त, किमनेन बन्धुजननाशकेन राज्येन—

वैमात्रेयो घातितो राज्यलोभा-
न्नन्दैस्तातो मे यथा सोदरैश्च ।
नन्दास्तद्वद्घातितास्ते मया त-
द्राज्यप्रेप्सां बन्धुहन्त्रीं धिगेनाम् ॥ १६ ॥

(प्राचीं दिशमवलोक्य) अहो, प्रातस्सन्ध्याप्युपनता—

प्राची दिगियं सन्ध्यारागैरक्ताभ्रचित्रिता भाति ।
दलितकलेबरकीर्णा नन्दानां युद्धभूमिरिव रक्ता ॥ १७ ॥

(परिक्रम्य चाणक्यमवलोक्य) हन्त, आर्यस्तावत्त्रियामामनधिगतसंवेश इव दृश्यते—

चिन्ताभरान्निश्चलगात्रयष्टे-
रार्यस्य निद्रा ह्यतिजागरेण ।
रक्ते दृशौ कुञ्चितपक्ष्मपंक्ती
कान्तेव मन्दं पिदधात्युपेत्य ॥ १८ ॥

(उपसृत्य) भगवन्, सौखशायिनकश्चन्द्रगुप्तः प्रणमति (प्रणमति)

चाणक्यः—वृषल, असमग्रकार्यकलापस्य मे कुतस्सुखशयनं (आसनं ददाति)

(चन्द्रगुप्तः—उपविशति)

कञ्चुकी—(सरभसं प्रविश्य) देव, प्रमादः ।

चन्द्रगुप्तः—क्षिप्रमावेदय, किं तत् ?

कञ्चुकी—पर्यङ्के पर्वतेशोऽयं कालजिह्मगदष्टवत् ।
दीर्घनिद्रां समासाद्य शेते शाद्वलसप्रभः ॥ १९ ॥

चाणक्यः—(सावेगाभिनयं) अपि सत्यं ?

कञ्चुकी—(साञ्जलिबन्धं) किमनृतं ब्रवीमि स्वामिसन्निधौ ?

चाणक्यः—रात्रौ तावत्तच्छयनगृहे किमासीद्यः कोपि ?

कञ्चुकी—आर्य, न कोपि, किन्तु केनचित्क्षपणकेनानीता काचित्सुन्दरी परमासीत्।

चाणक्यः—(सशीर्षान्दोलनं) चन्द्रगुप्त, अपि श्रुतं राक्षसप्रयोगोयं?

अस्मद्बले विनष्टे तु जेतुं शक्यस्त्वमित्ययम्।
राक्षसः पर्वतेशाय प्रायच्छद्विषकन्यकाम् ॥ २० ॥

(स्वगतं) दिष्ट्या स्वायत्तीकृतमर्धराज्यं, (प्रकाशं) हन्त, विधिविलसितं (दीर्घं निश्वस्य)—

श्वो दास्यामि प्रातरर्धं स्वराज्यं
तुभ्यं भूपेत्युक्तमाकर्ण्य तुष्टः।
सुप्तो रात्रौ पर्वतेशः प्रमीतः
किं वा ब्रूमो दैवचेष्टा विचित्रा ॥ २१ ॥

चन्द्रगुप्तः—भगवन्, पितृनिधनेन कुमारो मलयकेतुस्तावदस्मत्सधर्मा-संवृत्तः।

चाणक्यः—(स्वगतं) इयता कालेन भागुरायणेनापि निर्वर्तिता भवेदस्मदाज्ञा (प्रकाशं) चन्द्रगुप्त—

नन्दराज्यं यथा तुभ्यं नष्टताताय साम्प्रतम्।
दत्तं मया तथा तस्मै कुमारायापि दीयते ॥ २२ ॥

तदलं शोकेन, (कञ्चुकिनमवलोक्य) मयूरक, अनिवेदिततातवृत्तान्तं कुमारमलयकेतुमानय।

कञ्चुकी—तथा। (निष्क्रान्तः)

चाणक्यः—कः कोत्र भोः?

द्वारपालः—(प्रविश्य) आणदेदु अज्जो। (छाया—आज्ञापयत्वार्यः)

चाणक्यः—सूत्रकारान्द्रष्टुमिच्छामि।

द्वारपालः—अज्ज, गदो आणेदुं। (निष्क्रान्तः)

दारुवर्मा—(प्रविश्य सूत्रकारैस्सह) (स्वगतं) राक्षसादेशाच्चन्द्रगुप्तवधाय न्यक्षिपमयोमयं राजभवनद्वारशिरोभागे यन्त्रमनुत्पादितशङ्कमलमकरवं च समन्ताद्वारं, राजानुरागप्रकटनेन तदपवारयामि

तावदिदानीं (उपसृत्य प्रकाशं) आर्य, दारुवर्मा प्रणमति, (प्रणम्य) यथादेशमागता वयम् ।

चाणक्यः—शिल्पकर्मणा समलङ्क्रियतां प्रासादगोपुरपुरोभागः ।

सूत्रकाराः—(साञ्जलिवन्धं) अज्ज, पुढमं एव्व देव्वचन्दउत्तस्स णंदभवण-प्पवेसं उवलहिअ सुत्तआळेण दाळुवम्मणा कणअतोळणण्णासा-दिणा संक्खाळविसेसेण संक्खिदं ळाअभवणदुवारं, अह्मेहिं दाणिं अब्भन्तळे संक्खाळो आहेओ । (छाया—आर्य, प्रथममेव देवचन्द्रगुप्तस्य नन्द-भवनप्रवेशमुपलभ्य सूत्रकारेण दारुवर्मणा कनकतोरणन्यासादिना संस्कारविशेषेण संस्कृतं राजभवनद्वारं, अस्माभिरिदानीमभ्यन्तरे संस्कार आधेयः)

चाणक्यः—दारुवर्मन्, प्रथममेव किं संस्कृतं राजभवनद्वारम् ?

दारुवर्मा—(सविनयं) अथकिं—

महाद्वारं सान्द्रप्रचलकदलीस्तंभकलितं
वितानव्यालम्बिप्रथितमणिमुक्ताशबलितम् ।
विचित्रैश्चित्रौघैरपि निविडितं बद्धकुसुमं
प्रवेशार्थं राज्ञो विलसति विमानं स्थितमिव ॥ २३ ॥

चाणक्यः—(स्वगतं) राक्षसपक्ष्येणानेन भवितव्यं, यदस्मदादेशात्प्रागे-वानेन राजभवनद्वारमलङ्कृतं, मौर्यनिधनाय भूमिगृहवदत्रापि राक्षसादेशाद्यन्त्रविशेषः कल्पितो भवेत् । तत्परीक्ष्य भावि कार्यं कर्तव्यं, (हर्षमभिनीय प्रकाशं) साधु, दारुवर्मन्, अचिरादस्य राजानुरागस्यानुरूपं फलमधिगमिष्यसि ।

दारुवर्मा—(साञ्जलिबन्धं) अनुगृहीतोस्मि । (सूत्रकारैर्निष्क्रान्तः) .

कञ्चुकी—(प्रविश्य) (सबाष्पं) आर्य, कुमारमलयकेतुरपि निजस्कन्धावारा-दपक्रान्तः ।

चाणक्यः—(सावेगं) कुतः ?

कञ्चुकी—आर्य ! (इत्यर्धोक्तौ भयं नाटयति)

चाणक्यः—मयूरक, अलं भिया, तथ्यमावेदय ।

कञ्चुकी—आर्यभिया ।

चाणक्यः—(सभ्रूभङ्गं) कुतो वा मत्तो भीतिः, विशदं निवेदय ?

कञ्चुकी—कुमारदिदृक्षया तत्स्कन्धावारं गतोऽहमभिहितस्तत्रत्यैः, उषस्यैव प्रजविवाजिसमारूढेन भागुरायणेन प्रतिबोधितः कुमारः श्रावितश्च निजपितृनिधनं चाणक्यकृतं तत्पुरीं पाहुरीं नीतः, इति।

चाणक्यः—(कृतककोपमभिनीय) आः, किमुक्तं नन्दपक्षपातिना भागुरायणहतकेन? (गगने लक्ष्यं बध्वा) रे दुरात्मन्, अचिराद्द्रक्ष्यसि तावदेतत्फलं, (सनिर्वेदं) अहो, विधिविलसितं—

क्षणादुपरतो महीधरपतिस्सुहृत्साह्यकृ-
त्सुतो मलयकेतुरप्यतिजडो भिया धावितः।
विभज्य खलु राज्यमर्धमधुना महावैभवं
प्रतिश्रुतमिदं पुनर्वत ददामि कस्मै विधे ॥ २४ ॥

हा सुहृद्वर्य पर्वतेश्वर, परिश्रमानुरूपं फलं नानुभूतं किल भवता यच्चिन्तितं, भवत्तनयं मलयकेतुमपि वाऽभिषिच्य तावदनृणी भवेयमिति, तदपि न निर्व्यूढं, (दीर्घं निश्वस्य) चलितं तु चलितमेव, क्व पर्वतेश्वरभ्राता वैरोचकः? तस्मै दत्वापि वा राज्यमर्धमनृणी भविष्यमि।

चन्द्रगुप्तः—साधु चिन्तितं भगवता (कञ्चुकिनमवलोक्य) मयूरक, क्षिप्रमानय पर्वतेश्वरभ्रातरं वैरोचकं।

कञ्चुकी—तथा, (निष्क्रान्तः)

चाणक्यः—(स्वगतं) वैरोचकं तावदिदानीं कथमप्यानीय चन्द्रगुप्तनैपथ्यैरलङ्कृत्य निशीथे चन्द्रगुप्तोपवाह्यचन्द्रलेखाभिधगजवशाधिरूढं प्रस्थाप्य नगराभ्यन्तरं राजभवनद्वारे प्रवर्तिष्यमाणस्य कपटव्यापारस्य लक्ष्यीकरिष्यामि।

कञ्चुकी—(प्रविश्य) आर्य, स तु युष्मदतिसन्धानेन भ्रातृनिधनमाकर्ण्य नगरोपान्तोपवने नितरामार्तो वर्तते।

चाणक्यः—(सानुतापं) किं ब्रूमो मौर्ख्यं? तात चन्द्रगुप्त, यावन्नाधिगच्छामि प्रतिश्रुतार्थं, न तावन्मे चित्तस्वास्थमस्ति, तद्गच्छतु भवानेव सान्त्ववचनैस्तद्धृदयलग्नं शङ्काशल्यमपनुद्य कथमपि तमानयतु। राज्यमर्धं वितीर्य तावदनृणी भवेयम्।

चन्द्रगुप्तः—यथादिशति भगवान् (उत्थाय) मयूरक, नगरोपान्तोद्यान-मार्गमादर्शय।

कञ्चुकी—इत इतो देवः।

चन्द्रगुप्तः—( स्वगतं ) हन्त, आर्यस्य यदर्थोयमिति ज्ञातुमशक्यः खलु कार्यारम्भः। (निष्क्रान्तः)

चाणक्यः—स्नानार्थं वयमपि गच्छामः (उत्थाय स्वगतं) –

अनेन कर्मणाऽस्माकं परीवादो निराकृतः।
रक्षितश्चन्द्रगुप्तश्च भविष्यति न संशयः ॥ २५ ॥

( निष्क्रान्तः )

सप्तमोऽङ्कः।

---

## अष्टमोऽङ्कः

( ततः प्रविशति करगृहीतमायूरबर्हकलाप ऐन्द्रजालिकः )

ऐन्द्रजालिकः—(सहर्षं बर्हकलापमवलोक्य) शाहु बलिहकळाव शाहु—

अवळिचिदम्मि वि देशे थणिआणं किळ कळेशि शोहद्धं।
अहिणवमण्णं महुळं मह तह बहुशो जदो अ दावेशि ॥ १ ॥

(साट्टहासं) ळःक्खुशणिणदेशादो पढमं जहा मोअणिहणम्मि अच्चळिअं कम्मं शंदंशिअ पाळिओशिअभाअणे जादे हगे, तहा दाणिं वि ळाअभवणे शींहाशणं आळुळुःक्खुणो चंदउत्तश्श णिहणकए तहिं वि दंशइश्शं मह विज्जं, तदो ळःक्खुशप्पशादेण अहिगमिश्शं अ अहिआळं, (परिक्रम्य नेपथ्याभिमुखमवलोक्य) अह्मो, प्पमोए, जदो इदो एव्व आअच्छइ मित्ते प्पमोअए। ( छाया—साधु बर्हकलाप साधु—

अपरिचितेपि देशे धनिकानां किल करोषि सौहार्दं।
अभिनवमन्नं मधुरं मम तथा बहुशो यतश्च दापयसि ॥ १ ॥

राक्षसनिदेशात्प्रथमं यथा मौर्यनिधने आश्चर्यं कर्म सन्दर्श्य पारितोषिकभाजनं जातोहं, तथेदानीमपि राजभवने सिंहासनमारुरुक्षोश्चन्द्रगुप्तस्य निधनकृते तत्रापि दर्शयिष्यामि

मम विद्यां । ततो राक्षसप्रसादेनाधिगमिष्यामि चाधिकारं । अहो, प्रमोदः, यत इत एवागच्छति मित्रं प्रमोदकः)

(ततः प्रविशति खङ्गहस्तः प्रमोदकः)

प्रमोदकः—(खङ्गं परामृशन्) इमिणा खग्गेण विलूअ चंदउत्तश्श सिरोहिं इदो वि अहिअं धणं लहिश्शं (परिक्रामति) (छाया—अनेन खङ्गेन विलूय चन्द्रगुप्तस्य शिरोधिं इतोप्यधिकं धनं लप्स्ये)

ऐन्द्रजालिकः—प्पमोअअ, महाथणपीदंवलालंकिदे महालाए विअ प्पआशेशि, (छाया—प्रमोदक, महाधनपीताम्बरालङ्कृतो महाराज इव प्रकाशसे)

प्रमोदकः—(सप्रमोदं) अमच्चलःक्खशप्पशादेण मह एआलिशी दशा (छाया—अमात्यराक्षसप्रसादेन ममैतादृशी दशा)

ऐन्द्रजालिकः—पुण्णवंते शि, जदो अह्मेशु एआलिशे लःक्खशश्श प्पशादे ण णिवडइ (छाया—पुण्यवानसि, यतोस्मासु एतादृशो राक्षसस्य प्रसादो न पतति)

प्रमोदकः—अळं, चिंदाए, तुह्म वि णिवडिस्सइ, तं देण णिजुत्ते कम्मे प्पवुद्धेण तुए होदव्वं (छाया—अलं चिन्तया, त्वय्यपि निपतिष्यति, तत्तेन नियुक्ते कर्मणि प्रवुद्धेन त्वया भवितव्यं)

ऐन्द्रजालिकः—तहा, होदु, इमश्शिं णिशीहे चंदउत्तश्श लाअभवण-प्पवेशे हविश्शदि त्ति, चाणक्कहदएण श्शाविदत्थाओ किदाओ पोलाओ। तहिं जइआ मह विज्जं दंशइश्शं, तइआ तुए वि जागलिदेण पोलुशकम्मे दंशणिज्जे (छाया—तथा भवतु, अस्मिन्निशीथे चन्द्रगुप्तस्य राजभवनप्रवेशो भविष्यतीति चाणक्यहतकेन श्रावितार्थाः कृताः पौराः। तत्र यदा मम विद्यां दर्शयिष्यामि, तदा त्वयापि जागरितेन पौरुषकार्यं दर्शनीयं)

प्रमोदकः—(खङ्गं प्रकम्पयन्) अहइं, पेक्खदु भवं, तुह पुळदो एव्व चंदउत्त-हदअस्स शिरोहिं कअळीळावं विळूअ दंसइस्सं मह परक्कमं (छाया—अथकिं ? पश्यतु भवान्, तव पुरत एव चन्द्रगुप्तहतकस्य शिरोधिं कदलीलावं विलूय दर्शयिष्यामि मम पराक्रमं)

(निष्क्रान्तौ)

(प्रवेशकः)

(ततः प्रविशति चन्द्रगुप्तेन सह नगरोपान्तोपवनानोकहमूलतलनिषण्णो विषण्णो वैरोचकः)

वैरोचकः—हा तपस्विन्भ्रातः—

चाणक्यदुर्नयवशः प्रबलं बलौघं
शत्रोरहर्निशमपि प्रशमय्य शक्त्या ।
नीतोसि मृत्युमचिरान्ननु वञ्चकेन
व्याप्ते कृतघ्ननिकरैरिह किं ब्रवीमि ॥ २ ॥

(दीर्घं निश्वस्य) हा नियते—

भ्रात्रा वियुक्तोहमितः प्रयातः
प्रजावतीभिर्जितनन्दराज्यः ।
क्व वार्यपुत्रः कथयेति पृष्टो
दास्यामि ताभ्यः कथमुत्तरं हा ? ॥ ३ ॥

हा, कुमार मलयकेतो !—

अविदितसुव्यवहारं हा रोदिमि भवन्तमनुचिन्त्य ।
कृत्याकृत्यविवेकं बोधयितेतःपरञ्च को वा ते ? ॥ ४ ॥

चन्द्रगुप्तः—(दीर्घं निश्वस्य) हन्त, बालिशप्रायं जगत्—

अन्येन दुष्कर्म कृतं किलैत-
त्संक्रान्तमन्यत्र जनापवादात् ।
रुग्णस्य संसर्गवशात्प्रसक्त-
स्सांक्रामिको व्याधिरिवाप्रधृष्यः ॥ ५ ॥

तात, वैरोचक, तन्नैवापराधस्ते, यदेवमभिधीयते भवता किं वदन्तीमनुरुध्य । महाराजभ्रातः, किञ्चिद्विवक्षुरसि, तन्मनस्समाधीयतां, आधीयताञ्च मे वचसि ।

वैरोचकः—(सनिर्वेदं) तात, चन्द्रगुप्त, श्रोतव्यं सर्वमपि श्रुतवतास्मद्भ्रात्रानुभूतं किल, किं पुनरप्यस्ति वक्तव्यमवशिष्टम्—

विस्रब्धघातुकत्वं चाणक्यस्याम्बुपानवत्सुकरम् ।
मामपि किं वा हन्तुं चणकसुतेनाद्य चोदितः प्रातः ॥ ६ ॥

तदलं विवक्षया ।

चन्द्रगुप्तः—(कर्णौ पिधाय) शान्तं पापं, शान्तं पापं, वैरोचक, पुनरपि मा पातय मे श्रवणयोरीदृशं परुषतरं वचः, तदवधारय तावदसद्वचः ।

वैरोचकः—तात, कथय तावत्, यद्विवक्षुरसि ।

चन्द्रगुप्तः—महाराजभ्रातः–

प्रायो जगत्यनृतमाहुरतिप्रगल्भा-
स्सद्यःप्रियं परिजना धनसंग्रहार्थम् ।
सद्यः कटु प्रविरलस्सुखदं तु वक्ता
रुग्णाय तिक्तमपि वैद्य इवौषधं हि ॥ ७ ॥

वैरोचकः—तत्तु सत्यमेव, अत एव न क्वापि विस्रम्भमधिगच्छति मे हृदयम् ।

चन्द्रगुप्तः—न तथा कार्या विस्रम्भार्हेऽपि जने विचिकित्सा ।

वैरोचकः—अत्र तावत्कं वा प्रत्येमि विस्रम्भार्हम् ?–

बहिस्सर्वे सन्ति स्वजनसदृशा नीतिसुमुखाः
नवेद्मयन्तस्तत्त्वं कथमपि च तेषामहमिह ।
अहो चाणक्यस्य प्रथितयशसो नीतिविभवो
यतो मे च्छायायामपि जनयति द्वेषिजभयम् ॥ ८ ॥

चन्द्रगुप्तः—(सप्रश्रयं) वैरोचक, मैवं वादीः ।

वैरोचकः—कथं वा न ब्रूयाम्–

दर्वीस्थाने भ्रातरं मे निधाय
भ्रातृव्याग्निस्फीततापाद्विमुक्ताः ।
भोक्तुं पूर्णं नन्दराज्यं भवन्तो
जघ्नुर्व्याजाद्भ्रातरं प्राप्तराज्यम् ॥ ९ ॥

चन्द्रगुप्तः—यथार्थविदनेन भवद्धृदयलग्नं शङ्काकल्मषमभिप्रक्षाल्य सद्यः कृतार्थो भवानीति विनीतस्सन्निहितोसि, तत्तदवधारय, यद्विवक्षुरसि ।

वैरोचकः—निवेदय तावत् ।

चन्द्रगुप्तः—शृणु तावत्तथ्यमिदं–

सुहृच्छत्रुपक्षं समाश्रित्य नन्दान्
जघानेति संक्रुद्धचित्तेन तेन ।
अमात्येन शैलेश्वरे क्ष्वेलकन्यां
प्रयुज्य व्यदर्शि स्वकं राक्षसत्वम् ॥ १० ॥

वैरोचकः—कथं राक्षसेन घातितोऽस्मद्भ्राता ?

चन्द्रगुप्तः—अथ किं ? कर्तव्यकर्मनिष्णातेन तेन सर्वत्र प्रकाशितमेवं, "चाणक्यहतकेन निजार्धराज्यापहर्ता घातितः पर्वतेश्वरः" इति।

वैरोचकः—कुमार, युक्तमभिहितं भवता, राजनीतिनिष्णातः खलु स धीमान् (विचिन्त्य) तर्हि किञ्चिदत्र प्रष्टुमिच्छामि।

चन्द्रगुप्तः—पृच्छ सविस्रम्भम्।

वैरोचकः—जिज्ञासे, किमर्थमितः कुमारमलयकेतुः पलायितः इति।

चन्द्रगुप्तः—वैरोचक, किं ब्रवीमि ? मूढप्रायं जगत्, विश्वसनीये तावदविश्वासः, अविश्वसनीये विश्वासः, चाणक्येन घातितः पर्वतेश्वर इति मलयकेतुरप्यनिवेद्यैवास्मभ्यमितो यातः। आर्यस्य तावत्प्रतिश्रुतार्धराज्यप्रदित्सा बलवती, अत एव तदीयाय भवते वितीर्यानृणीभवेयमिति भवदन्तिकं प्रेषितोऽस्मि। तदेहि—

अनुभुंक्ष्व चिरं राज्यमभिषिक्तो यथासुखम्।
स्वयमेवागतां लक्ष्मीं को वा वद जिहासति ? ॥ ११ ॥

(इत्युत्तिष्ठति)

वैरोचकः—(स्वगतं) युक्तमभिहितमनेन, तदिदानीं राज्यमर्धं स्वायत्तीकृत्य प्रदास्यामि कुमारमलयकेतवे।

चन्द्रगुप्तः—किमधुनापि चिन्त्यते, पश्यावसितमहः—

रक्तो विभाति चरमाद्रितटेऽर्कबिम्बः
कालद्विजेन पटुना हि समूह्यमानः।
पट्टाभिषेचनकृते तव शातकुम्भ
कुम्भो महानिव जलाहरणाय सिन्धोः ॥ १२ ॥

तदेहि।

वैरोचकः—(उत्थाय) यथा रोचते भवते, (चन्द्रगुप्तेन सह परिक्रामति) (ततः प्रविशति निजदूष्योपविष्टः पुरोनिहितालङ्कारस्थगिकस्सचिन्तश्चाणक्यः)

चाणक्यः—(दीर्घं निश्वस्य स्वगतं) कष्टं हि राज्यस्य स्वायत्तीकरणं ? मयेदानीं

विस्तीर्य युक्तिजालं प्रदर्श्य वस्तु प्रलोभ्यश्च।
प्रत्यर्थिमत्स्यवर्गो धीवरवद्धीमता ग्राह्यः ॥ १३ ॥

किमद्यापि चिरयति चन्द्रगुप्तः ? तेन वैरोचकेन राज्याभिषेचनमङ्गीकृतं वा न वा न जाने। यद्यनभिमतं तदा दुरन्तो भवेदस्मदुद्यमः। इदं तावत्पर्वतेश्वरस्याभरणत्रयं राक्षससङ्ग्रहणार्थं रक्षणीयं, सिंहासनाधिरोहणावसरे चन्द्रगुप्तव्यापादनाय कश्चनैन्द्रजालिको राक्षसेन नियुक्त इति जीवसिद्धिमुखादवगतं, तत्परिहाराय मत्पक्ष्यो मया नियुक्त ऐन्द्रजालिकः, अधुना तु, वैरोचकानागमनमेव प्रतिबध्नाति प्रकृतं कार्यम्।

चन्द्रगुप्तः—(उपसृत्य) भगवन्, पर्वतेश्वरस्य भ्राता यथानियोगं सन्निहितः।

चाणक्यः—दिष्ट्या सफलोद्यमोऽस्मि, महान्प्रमोदः, महाराजवैरोचक, इदमासनम्। (वैरोचकः उपविशति)

चाणक्यः—(सानुकम्पाभिनयं) हन्त, वैरोचक, भवद्भ्रातुर्दौर्गत्यमनुचिन्त्य नितरां दूयते मे हृदयम्—

अस्मत्साह्यकृते बलेन सहितो देशान्तरं पर्वत-
स्वामी प्राप्य च विक्रमेण विजयं लब्ध्वा श्रियञ्च द्विषाम्।
नन्दानां निधनेन जृम्भितमहाक्रोधाग्निना मन्त्रिणा
गूढं हा विनिपातितो मयि कृता तद्भ्रातुकत्वप्रथा ॥ १४ ॥

मन्दविवेकेन पिशुनजनोपदेशानुयायिना तत्पुत्रेण मलयकेतुना तु निजबाल्योचितमाचरितं कर्म, एवं स्थिते, तद्बन्धुजनमन्तरा कस्मै प्रदेयमिदं प्रतिश्रुतमर्धराज्यम् ?

वैरोचकः—आर्य, नृशंसराक्षसकृत्येन सर्वत्राप्यविश्वास एव रूढमूलस्संवृत्तः।

चाणक्यः—एवं (चन्द्रगुप्तमवलोक्य) पर्वतेश्वरस्याभरणत्रयमिदं, तन्मृतितिथौ श्रोत्रियेभ्यो दित्सुरस्मि, तत्कोशागारं प्रापय। (इत्यर्पयति)

वैरोचकः—(स्थगिकाकवाटमुद्घाट्य विलोक्य सवाष्पं)—

अहो, तारा हारास्सुहृद इव संश्लिष्य मम ये
चिरं भ्रातुः कण्ठं सुरुचिरमतन्वन्नतिमुदम्।
त एते तन्नाशादिव रुचिमिषोद्बाष्पनिकराः
प्रलीयन्ते स्वात्मप्रकटनजलज्जाः पटलके ॥ १५ ॥

चन्द्रगुप्तः—वैरोचक, अलं शोकेन, कः कोत्र भोः ?

अधिकृतः पुरुषः—(प्रविश्य) अयमहमस्मि ।

चन्द्रगुप्तः—कोशागारं प्रापय स्थगिकामिमाम् ।

पुरुषः—तथा । (पेटिकामादाय निष्क्रान्तः)

चाणक्यः—चन्द्रगुप्त, वैरोचकमेनं भवदलङ्कारैर्भवन्निर्विशेषमलङ्कुरु ।

चन्द्रगुप्तः—यथाज्ञापयति भगवान् । (वैरोचकेन निष्क्रान्तः)

चाणक्यः—(गगने लक्ष्यं बध्वा) रे, राक्षस, चाणक्योऽहमस्मि ।

चन्द्रगुप्तः—(आत्मनिर्विशेषनेपथ्येन वैरोचकेन सह प्रविश्य) भगवन्, सज्जोयं ।

चाणक्यः—(निर्वर्ण्य) वत्स, चन्द्रगुप्त—

मकुटकुण्डलहारसुमेखला कटककाञ्चनचेलपरिष्कृतः ।
सितसुमावलिमण्डितकन्धरो ह्यनुकरोति भवन्तमयं नृपः ॥१६॥

पुरुषः—(प्रविश्य अधिकृतः) देव, आभरणस्थगिका कोशागारं प्रापिता, कार्तान्तिकनिर्दिष्टो निशीथसमयोपि सन्निहितः ।

चाणक्यः—तर्हि, चन्द्रगुप्तौपवाह्या चन्द्रलेखा नाम समलङ्कृता गजवशा-क्षिप्रमानीयताम् ।

पुरुषः—तथा (निष्क्रान्तः)

चाणक्यः—भोः, पर्वतेश्वरभ्रातः, अस्मत्सुहृदि भवद्भ्रातरि हठादकालमृत्युमधिगतवति, तद्देयमर्धराज्यं तदीयाय भवते वितीर्णमिदानीं तदनुभुंक्ष्व यथासुखं ।

वैरोचकः—(साञ्जलिबन्धं) आर्य, महान्प्रमोदः, भवदनुग्रहादहं राजा संवृत्तः ।

(ततः प्रविशति निषादिना बर्बरकेणानीयमाना समलङ्कृता गजवशा)

बर्बरकः—शण्णिहिदा वशा, (छाया—सन्निहिता वशा)

चाणक्यः—(विलोक्य)—

चञ्चत्काञ्चनचित्रप्रावरणालङ्कृतोच्चपृष्ठेयं ।
घण्टाटङ्कृतिसुभगा भूम्ना विभ्राजतेऽभ्रमुरिव ॥ १७ ॥

वैरोचक, तदधिरुह्य तावदेनां सफलीकुरु पौरनयनानि यात्रा-महोत्सवेन ।

(बर्बरकः—वशामुपवेशयति)

वैरोचकः—यथादिशत्यार्यः (वशामधिरोहति)

बर्बरकः—(वशायास्स्कन्धमधिरुह्य वशामुत्थाप्य च स्वगतं) जइ, जह कहं चि ळाअभवणदुवरे एसो चंदउत्तहदओ सरव्वादो प्पस्भट्टो हवे, तइआ इमिणा अंकुसकणअदंडिअब्भंदळप्पवेसिदेण खग्घेण से सिरोहिं-विळूअ किदत्थो हुवमु (छाया—यदि यथाकथञ्चिद्राजभवनद्वारे एष चन्द्रगुप्तहतकश्शख्यातप्रभ्रष्टो भवेत, तदानेनाङ्कुशकनकदण्डिकाभ्यन्तरप्रवेशितेन खङ्गेनास्य शिरोधिं विलूय कृतार्थो भवेयं)

(नेपथ्ये—वादित्रघोषः)

वैरोचकः—(साञ्जलिबन्धं) आर्य, प्रस्थितोऽस्मि (निष्क्रान्तः)

चाणक्यः—(जनान्तिकं) वत्स, चन्द्रगुप्त, दूरत एवान्धकारान्तर्हितावावां तमनुसरन्तौ पश्यावस्तावद्राजभवनद्वारदेशे किं प्रचलिष्यतीति ? (चन्द्रगुप्तेन परिक्रामति)

( नेपथ्ये कलकलः )

चाणक्यः—(विलोक्य) वत्स, पश्य, राजभवनद्वारे—

केनापि पातितं स्फीतं यन्त्रतोरणमद्भुतम् ।
स्फूर्जथुध्वानभीमं तदवधीत्तं निषादिनम् ॥ १८ ॥

चन्द्रगुप्तः—हन्त, पश्यत्वार्यः, दारुवर्मा तोरणान्तरादुत्प्लुत्य हन्ति लोष्टकीलेन वैरोचकम् ।

(पुनर्नेपथ्ये) हा हतोऽस्मि ।

चाणक्यः—हतो वैरोचकः ।

चन्द्रगुप्तः—(सवैलक्ष्यं विलोक्य) पश्यत्वार्यः, वैरोचकानुयायिभिः परितो अभिहन्यते दुरात्मा दारुवर्मा ।

चाणक्यः—राक्षसपक्ष्यस्सनृशंसो निजदौरात्म्यानुरूपं फलमनुभवतु नाम ।

(पुनर्नेपथ्ये) हा हतोऽस्मि ।

चन्द्रगुप्तः—सोपि हतः, (सविनय) भगवन्, भवतोपक्षिप्तमेकं नीतिबीजं क्षिप्रमेव फलप्रदायि संवृत्तम् ।

चाणक्यः—(समन्दहासं) चन्द्रगुप्त, अपि दृष्टं मे तन्त्रम्—

पर्वतपतिवधजातो महान्कलङ्को निवारितो ह्यनया ।
युक्त्यैकयैव निहतौ तौ धूर्तौ दारुवर्मबर्बरकौ ॥ १९ ॥

सेनापतिः—(प्रविश्य) (सबाष्पं) आर्य, हतश्चन्द्रगुप्तः ।

चाणक्यः—आः, केन ?

सेनापतिः—दारुवर्मणा ।

चाणक्यः—(सक्रोधं) गृहाण तम् ।

सेनापतिः—सोपि हतः ।

चाणक्यः—स तु केन ?

सेनापतिः—महाराजचन्द्रगुप्तानुयायिभिः ।

चाणक्यः—(सभ्रूभङ्गं) कथम् ?

सेनापतिः—(सकम्पं) आर्य—

हतो बर्बरको यन्त्रतोरणेन ततः प्रभुः ।
सूत्रकारेण सोपि द्राक्चन्द्रगुप्तानुयायिभिः ॥ २० ॥

चाणक्यः—(कृतकदुःखमभिनीय) हा पर्वतेश्वरभ्रातः, भवतापि नानुभूतं किल मया दत्तं राज्यं, (सेनापतिमवलोक्य) सेनापते, क्षिप्रमेव तान्कुणपानुत्सार्य दूरं राजभवनद्वारं विशोधय ।

सेनापतिः—तथा । (निष्क्रान्तः)

चाणक्यः—वत्स, प्रासादाभ्यन्तरेप्यद्भुतं कर्म प्रचलिष्यति, तत्पश्य तावदवगुण्ठितसर्वप्रतीकः ।

चन्द्रगुप्तः—यथादिशति भगवान् (पटेनावगुण्ठितगात्रस्तिष्ठति)

चाणक्यः—(चन्द्रगुप्तेन परिक्रम्य) वत्स, प्रासादाभ्यन्तरमागतास्स्मः सेनापते, सुगाङ्गप्रासादमार्गमादर्शय ।

सेनापतिः—इत इत आर्यः ।

चाणक्यः—(चन्द्रगुप्तेन सुगाङ्गप्रासादमारुह्य) भो भोः पौराः, राज्यार्धेऽभिषेक्ष्यमाणः पर्वतकभ्राता वैरोचको राक्षसगूढप्रयोगेन हतः । किं कुर्मः ? तस्मिन्दैवमपि प्रतिकूलम् । तदिदानीं चन्द्रगुप्तमभिषेक्तुमिच्छामि ।

पौराः—प्रियं नः, प्रियं नः ।

(चाणक्यनियुक्त ऐन्द्रजालिकः—समलङ्कृतं मायाचन्द्रगुप्तं प्रवेशयति)

चन्द्रगुप्तः—(मायाचन्द्रगुप्तमवलोक्य सवैलक्ष्यं स्वगतं)—

अहो मायाबलं यस्मादेनं पश्यामि तत्वतः ।
आत्मनः प्रतिबिम्बं ध्रुर्यादर्शे इव निर्मले ॥ २१ ॥

मायाचन्द्रगुप्तः—[सविनयं चाणक्यमुपसृत्य प्रणम्य (सिंह्मासनमधिरोहति)]

(तत्क्षणमेव सिंह्मासनमग्निपरीतं प्रज्वलति)

(सिंह्मासनपृष्ठवर्ती प्रमोदकः खड्गमादाय तिष्ठति)

(चाणक्यनियुक्त ऐन्द्रजालिकः—राक्षसनियुक्तेनैन्द्रजालिकेन प्रयुक्तां मायां निवार्य निजमायामुपसंहरति)

(सर्वे—सवैलक्ष्यं पश्यन्ति)

चाणक्यः—(सक्रोधं) सेनापते, गृहाण तं खड्गधारिणम् ।

सेनापतिः—यथादिशत्यार्यः । (प्रमोदकं गृहीत्वा चाणक्यपार्श्वे स्थापयति)

चाणक्यः—दुरात्मानमेनं राक्षसनियुक्तेनैन्द्रजालिकेन सह बन्धनागारं प्रवेशय । प्रकृतकार्यानन्तरमेतौ यावद्विचारयामः ।

सेनापतिः—तथा । (ताभ्यां सह निष्क्रान्तः)

चाणक्यः—वत्स, चन्द्रगुप्त, आरोहतु भवानिदं सिंह्मासनम् ।

चन्द्रगुप्तः—यथादिशति भगवान् । (इत्यवगुण्ठनमुत्सृज्य चाणक्यं प्रणम्य सिंह्मासनमारोहति)

(चाणक्यः—चन्द्रगुप्तं तीर्थोदकैरभिषिञ्चति)

तापसः—(प्रविश्य) देव, मलयमहीभृत्पादमाश्रितः कश्चन राक्षसः, तापसानस्मान्पीडयति, तद्रक्षणीया वयम् ।

चाणक्यः—(स्वगतं) राक्षसान्वेषणाय प्रेषितस्तापसवेषधारी वेगशर्मा नामास्मत्प्रणिधिरयं, अनेन, मलयकेतुमाश्रित्य वर्तते राक्षसः इति सूचितं, भवतु, युक्त्या तं वशीकरिष्यामि, (प्रकाशं) तपोधन, मा भैषीः, महाराजश्चन्द्रगुप्तोऽयमभिरक्षति । चन्द्रगुप्त, न

याचत्तममात्यराक्षसं भवद्वशे स्थापयामि, न तावद्बध्नामि विमुक्तां शिखामेनाम् ।

चन्द्रगुप्तः—(साञ्जलिबन्धं) भगवन्, धन्योस्मि ।

चाणक्यः—किं ते भूयः प्रियमुपहरामि ।

चन्द्रगुप्तः—भगवन्,

प्रत्यूहा विनिवारिता बहुविपत्तिसिन्धोस्समुत्तारितो
द्रागारोपित एव सिंह्मरुचिरं पीठं सुगाङ्गे स्थितम् ।
हन्ताहं भवता कृपाजलकणैस्सिक्तोपि सिक्तः पुनः
नन्दानां सचिवं करिष्यसि वशे किं मे ततोस्ति प्रियम्? ॥२२॥

तथापि, इदमस्तु । (भरतवाक्यं)

भूपालाः परिपालयन्तु भुवनं न्याय्येन सम्यक्पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोस्तु नित्यं सुखी ।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृताः
सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः ॥ २३ ॥

( इति निष्क्रान्तास्सर्वे )

इति श्रीयदुशैलवासि बालधन्वि
जग्गूवकुलभूषणकविविरचिते
प्रतिज्ञाकौटिल्यनाटके
अष्टमोऽङ्कः ।

सम्पूर्णं नाटकम्

# ॥ प्रसन्नकाश्यपनाटकम् ॥

(अभिज्ञानशाकुन्तलस्य उत्तरभागः)

## Letter of Appreciation by Prof. Ramakuber Malaviya of Benares Sanskrit University, Varanasi (Benares)

॥ श्रीः ॥

साहित्यशास्त्रमर्मज्ञः कविकैरवचन्द्रमाः ।
विद्यासुधानिधिः श्रीमाञ्जग्गूवकुलभूषणः ॥ १ ॥
लक्ष्म्याः परमभक्तोऽयं श्रीमन्नारायणस्य च ।
धार्मिकस्सत्यसंधश्च ज्ञानामृतपयोनिधिः ॥ २ ॥
स्वभावे चातिसरलो मरालो बुधमानसे ।
तेनैव रचितं रम्यं विद्वच्चेतोऽनुरञ्जकम् ॥ ३ ॥
प्रसन्नकाश्यपं नाम नाटकं सुरसाप्लुतम् ।
कालिदासकृतं हृद्यं यच्छाकुन्तलनाटकम् ॥ ४ ॥
यद्दृष्ट्वा संप्रसीदन्ति रसिका विदुषां वराः ।
तस्यैवोत्तरभागोऽत्र सौन्दर्येण निवेशितः ॥ ५ ॥
रसमन्दाकिनी मन्दं मन्दमत्र प्रवाहिता ।
पश्यन्तु स्नान्तु वा तस्यां ते धीरा ये रसैषिणः ॥ ६ ॥
तद्वस्तुनः प्रशंसा का यत्स्यात्प्रत्यक्षमागतम् ।
दर्पणे स्वमुखं दृष्ट्वा कोऽन्यं पृच्छति बुद्धिमान् ॥ ७ ॥
श्रीमद्रामकुवेरेण मालवीयेन मज्जता ।
प्रसन्नकाश्यपाम्भोधौ रत्नराशिः प्रकाशितः ॥ ८ ॥
प्रसन्नचेतसाऽशास्ते यदयं मणिरुद्धृतः ।
चेतो हर्म्याणि विदुषां प्रकाशयतु सर्वदा ॥ ९ ॥

**रामकुबेर मालवीयः**

# श्लोकानामकारादि सूची

# शुद्धिपत्रिका

| Page | Line | अशुद्धं | शुद्धं |
|---|---|---|---|
| 13 | 12 | जाना | जना |
| 16 | 20 | सिर | शिर |
| 19 | 10 | लखि | लिखि |
| 19 | 12 | लुपा | लपा |
| 19 | 17 | द्र | ध |
| 28 | 20 | वि | वि |
| 29 | 20 | भ्व | व्भ |
| 31 | 24 | ट्ठि | ट्टि |
| 34 | 19 | न्य | त्य |
| 35 | 22 | भाव | भवा |
| 36 | 16 | संत्या | सत्या |
| 42 | 23 | ष्ठ ष्ठं | ष्ट ष्टं |
| 44 | 17 | ध्य | द्य |
| 45 | 5 | ष्टा | टा |
| 45 | 15 | त्यं | त्थं |
| 47 | 28 | गृ | घृ |
| 48 | 15 | थ्या | थ्य |
| 51 | 9 | म | मु |
| 51 | 12 | न | नं |
| 52 | 15 | ॥३७॥ | ॥२७॥ |
| 53 | 18 | ऽ। | मा |
| 57 | 16 | को | कौ |
| 58 | 7 | प | पे |
| 59 | 22 | मसु | समु |
| 61 | 18 | यिन | यनि |
| 62 | 4 | श्रुतं | श्रुतं? |
| 62 | 4 | यं ? | यं। |
| 62 | 23 | द्दे | वे |
| 64 | 2 | स्यै | स्ये |
| 64 | 16 | ष्य | ष्या |
| 64 | 27 | स्थ | स्थ्य |
| 66 | 15 | द्ध | यि |
| 69 | 26 | ष्ठ | ष्ट |
| 71 | 27 | ङ्कि | ङ्कृ |
| 72 | 8 | ख्या | रव्या |
| 72 | 20 | ष्ट | ह |

# शुद्धिपत्रिका

| Page | Line | अशुद्धं | शुद्धं | Page | Line | अशुद्धं | शुद्धं |
|---|---|---|---|---|---|---|---|
| 13 | 12 | जाना | जना | 51 | 12 | न | नं |
| 16 | 20 | सिर | शिर | 52 | 15 | ॥३७॥ | ॥२७॥ |
| 19 | 10 | लखि | लिखि | 53 | 18 | ऽ। | मा |
| 19 | 12 | लुपा | लपा | 57 | 16 | को | कौ |
| 19 | 17 | द | ध | 58 | 7 | प | पे |
| 28 | 20 | बि | वि | 59 | 22 | मसु | समु |
| 29 | 20 | भ्व | व्भ | 61 | 18 | यिन | यनि |
| 31 | 24 | ट्ठि | ट्टि | 62 | 4 | श्रुतं | श्रुतं ? |
| 34 | 19 | न्य | त्य | 62 | 4 | यं ? | यं। |
| 35 | 22 | भाव | भवा | 62 | 23 | दे | वे |
| 36 | 16 | संत्या | सत्या | 64 | 2 | स्यै | स्ये |
| 42 | 23 | ष्ठ ष्ठं | ष्ट ष्टं | 64 | 16 | ष्य | ष्या |
| 44 | 17 | ध्य | द्य | 64 | 27 | स्थ | स्थ्य |
| 45 | 5 | ष्टा | टा | 66 | 15 | द्ध | यि |
| 45 | 15 | त्यं | त्थं | 69 | 26 | ष्ठ | ष्ट |
| 47 | 28 | गृ | घृ | 71 | 27 | ङ्कि | ङ्कृ |
| 48 | 15 | श्या | श्य | 72 | 8 | ख्या | रव्या |
| 51 | 9 | म | मु | 72 | 20 | ष्ट | ह |